पञ्चमे काण्डे षडनुवाकाः । तत्र प्रथमेनुवाके पञ्च सूक्तानि । तत्र "ऋधङ्मन्त्रः" "तदिद् आस" इति सूक्ताभ्यां हस्ति-पृष्ठे पुरुषशिरसि वा निहितायाम् आश्वत्थ्यां पात्र्यां त्रिवृति गोमयपरिचये अग्निं प्रज्वाल्य आज्यं जुह्वत् शत्रून् अभिक्रामति संग्रामजयकामः ॥

तथा तस्मिन्नेव कर्मणि वराहखातमृत्तिकाम् आनीय राजानो वेदिं कुर्वन्ति । ततः पुरोधा आभ्यां सूक्ताभ्याम् आज्यं स-क्तूंश्च जुहुयात् । धनुरिध्मे तन्त्रे धनुःसमिधः इष्विध्मे तन्त्रे इषुसमिधश्च आदधाति । अपि च धनुः संपातवद् विमृज्य अभि-मन्त्र्य राज्ञे प्रयच्छति ॥

तथा तस्मिन्नेव कर्मणि युद्धे एकबाणेन मृतस्य पुरुषस्य इध्मम् उपसमाधाय उपरि चक्रं धारयित्वा दीर्घदण्डेन स्रुवेण आभ्यां चक्रच्छिद्रे अग्नौ आज्यं जुहोति । उत्तिष्ठ संनह्य प्रहर युध्यस्वेत्यादिकां प्रोत्साहनवाचं श्रुत्वा युद्धे योजयेत् ॥

"यदि चिन्नु त्वा" [५. २. ४] इति ऋचं परसैनिकान् अनुब्रूयात् ॥

एतेषां कर्मणां विकल्पः । कृतैरवश्यं जयो भवति ॥ राजा वैश्यश्चेद् उक्तानि कर्माणि "यदि चिन्नु त्वा" [५. २. ४] इति ऋचा कार्याणि । जयकामः सेनापतिश्चेद् उक्तान्येव कर्माणि "त्वया वयम्" [५. २. ५] इत्येकया ऋचा कार्याणि । युद्धयो-ग्यत्वपरीक्षणकर्मणि "नि तद् दधिषे" [५. २. ६] इति ऋचा उदपात्रम् अभिमन्त्र्य तस्मिन् द्वौ द्वौ योद्धारौ राजा अवे-क्षयेत् । तयोर्मध्ये यं यं न पश्येत् तं तं युधि न योजयेत् ॥ "नि तद् दधिषे" इति ऋचा नवे रथे समारथिं राजानम् आस्था-पयति ॥

सूत्रितं हि । "ऋधङ्मन्त्रस्तदिदासेत्याश्वत्थ्यां पात्र्यां त्रिवृति गोमयपरिचये हस्तिपृष्ठे पुरुषशिरसि वाऽमित्रान् जुह्वद् अभि-
"क्रम्य निवपति । वराहविहिताद् राजानो वेदिं कुर्वन्ति । तस्यां प्रदानान्तानि । एकेष्वा हतस्यादहन उपसमाधाय दीर्घदण्डेन
"स्रुवेण रथचक्रस्य खेन समया जुहोति । योजनीयां श्रुत्वा योजयेत् । यदि चिन्नु त्वा [५. २. ४] नमो देववधेभ्यः [६. १३]
"इत्यन्वाह" इत्यादि [कौ. २. ६] ॥

तथा पुष्टिकर्मसु आभ्यां सूक्ताभ्यां मैश्रधान्यं भ्रष्टपिष्टं सक्तुम् अजालोहितमिश्रितं रसमिश्रितं च संपात्य अभिमन्त्र्य अश्नीयात् ॥

तथा तेष्वेव कर्मसु आभ्यां सूक्ताभ्यां त्रिषु उदुम्बरचमसेषु प्लक्षचमसेषु वा मैश्रधान्यं प्रक्षिप्य रसांश्च संपात्य अभिमन्त्र्य अश्नीयात् । तत्र सूत्रोक्तमन्त्रैः पूर्वाह्णमध्याह्नापराह्णकाले एकैकचमसभक्षणम् ॥

तथा तत्रैव कर्मसु आभ्यां सूक्ताभ्याम् ऋतुमत्याः स्त्रिया लोहितं रसमिश्रितं कृत्वा संपात्याभिमन्त्र्य प्रादेशिनीमध्यमाङ्गु-लिभ्यां प्राश्नीयात् ॥

तद् उक्तं कौशिकेन । "ऋधङ्मन्त्रस्तदिदासेति मैश्रधान्यं भृष्टपिष्टं लोहितालंकृतं रसमिश्रम् अश्नाति । अभृष्टं
"प्लक्षोदुम्बरस्योत्तरतोऽग्नेस्त्रिषु चमसेषु पूर्वाह्णस्य तेजसाग्रम् अन्नस्य प्राशिषम् इति पूर्वाह्णे । मध्यंदिनस्य तेजसा मध्यम्
"अन्नस्य प्राशिषम् इति मध्यंदिने । अपराह्णस्य तेजसा सर्वम् अन्नस्य प्राशिषम् इत्यपराह्णे । ऋतुमत्याः स्त्रिया अङ्गुलिभ्यां लो-
"हितम्" इति [कौ० ३. ५] ॥

तथा क्षेत्रं कामयमानः काम्यमाने क्षेत्रे आभ्यां सूक्ताभ्यां भक्तं दधिमधुमिश्रं संपात्य अभिमन्त्र्य अश्नीयात् । तद् उक्तं कौशिकेन । "यत् क्षेत्रं कामयते तस्मिन् कीलालं दधिमधुमिश्रम्" [कौ० ३. ५] इति ॥

तथा सप्तग्रामलाभकर्मणि अस्य सूक्तस्य विनियोगः । तद् उक्तं कौशिकेन । "संवत्सरं स्त्रियम् अनुपेत्य शुक्तयां रेत आनीय तण्डुलमिश्रम्" इति [कौ० ३. ५] । संवत्सरं ब्रह्मचर्यं कृत्वा ततो मैथुनं कृत्वा रेतस्तण्डुलमिश्रं कृत्वा संपात्य अभिमन्त्र्य अ-श्नातीति तस्यार्थः ॥

तथा समृद्धिकर्मण्यपि विनियुज्यते सूक्तद्वयम् एतत् । "निशायाम् आग्रयणतण्डुलान् उदङ्क्यां मधुमिश्रान् निदधाति आ य-

नानां पत्नेः । [illegible] इति [illegible] । [illegible] अहिरण्य- [illegible] मधुभि[illegible] [illegible] आहिर- [illegible]नकालपर्यन्त [illegible] [illegible] अथा- तानि तस्यार्थः ॥

[illegible] इति [illegible] " [illegible] पृथिवी महे" [६.१७] इति सूक्तस्य प्रस्थानताम अनुसंधेयः ॥

ऋधङ्मन्त्रो योनिं य आबभूवामृतासुर्वर्धमानः सुजन्मा ।

अदब्धासुर्भ्राजमानोऽहेव त्रितो धर्ता दाधार त्रीणि ॥ १ ॥

ऋधक्ऽमन्त्रः । योनिम् । यः । आऽबभूव । अमृतऽअसुः । वर्धमानः । सुऽजन्मा ।

अदब्धऽअसुः । भ्राजमानः । अहाऽइव । त्रितः । धर्ता । दाधार । त्रीणि ॥ १ ॥

आ यो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुषे पुरूणि ।

धास्युर्योनिं प्रथम आ विवेशा यो वाचमनुदितां चिकेत ॥ २ ॥

आ । यः । धर्माणि । प्रथमः । ससाद । ततः । वपूंषि । कृणुषे । पुरूणि ।

धास्युः । योनिम् । प्रथमः । आ । विवेश । आ । यः । वाचम् । अनुदिताम् । चिकेत ॥ २ ॥

यस्ते शोकाय तन्वं रिरेच क्षरद्धिरण्यं शुचयोऽनु स्वाः ।

अत्रा दधेते अमृतानि नामास्मे वस्त्राणि विश एरयन्ताम् ॥ ३ ॥

यः । ते । शोकाय । तन्वम् । रिरेच । क्षरत् । हिरण्यम् । शुचयः । अनु । स्वाः ।

अत्र । दधेते इति । अमृतानि । नाम । अस्मे इति । वस्त्राणि । विशः । आ । ईरयन्ताम् ॥ ३ ॥

प्र यदेते प्रतरं पूर्व्यं गुः सदःसद आतिष्ठन्तो अजुर्यम् ।

कविः शुषस्य मातरा रिहाणे जाम्यै धुर्यं पतिमेरयेथाम् ॥ ४ ॥

प्र । यत् । एते । प्रऽतरम् । पूर्व्यम् । गुः । सदःऽसदः । आऽतिष्ठन्तः । अजुर्यम्

कविः । शुषस्य । मातरा । रिहाणे इति । जाम्यै । धुर्यम् । पतिम् । आ । ईरयेथाम् ॥ ४ ॥

तदू षु ते महत् पृथुज्मन् नमः कविः काव्येना कृणोमि ।

यत् सम्यञ्चावभियन्तावभि क्षामत्रा मही रोधचक्रे वावृधेते ॥ ५ ॥

तत् । ऊं इति । सु । ते । महत् । पृथुऽज्मन् । नमः । कविः । काव्येन । कृणोमि ।

---

१ So all our authorities. २ R एर°.

यत् । सम्यञ्चौ । अभिऽयन्तौ । अभि । क्षाम् । अत्रं । मही इति । रोधंचक्रे इति रोधंऽचक्रे । ववृधेते इति ॥ ५ ॥

सप्त मर्यादाः कवयंस्ततक्षुस्तासामिदेकामभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य[1] नीडे[2] पथां विसर्गे धरुणेषु तस्थौ ॥ ६ ॥

सप्त । मर्यादाः । कवयः । ततक्षुः । तासाम् । इत् । एकाम् । अभि । अंहुरः । गात् ।
आयोः । ह । स्कम्भः । उपमस्य । नीडे । पथाम् । विऽसर्गे । धरुणेषु । तस्थौ ॥ ६ ॥

उतामृतासुर्व्रत एमि कृण्वन्नसुरात्मा तन्व[3]स्तत् सुमद्गुः ।
उत वा शक्रो रत्नं दधात्यूर्जया वा यत् सचते हविर्दाः ॥ ७ ॥

उत । अमृतऽअसुः । व्रतः । एमि । कृण्वन् । असुः । आत्मा । तन्वः । तत् । सुमत्ऽगुः ।
उत । वा । शक्रः । रत्नम् । दधाति । ऊर्जया । वा । यत् । सचते । हविःऽदाः ॥ ७ ॥

उत पुत्रः पितरं क्षत्रमीडे ज्येष्ठं मर्यादमह्वयन्त्स्वस्तये ।
दर्शन् नु ता वरुण यास्ते विष्ठा आवर्व्रततः[4] कृणवो वपूंषि ॥ ८ ॥

उत । पुत्रः । पितरम् । क्षत्रम् । ईडे । ज्येष्ठम् । मर्यादम् । अह्वयन् । स्वस्तये ।
दर्शन् । नु । ताः । वरुण । याः । ते । विऽस्थाः । आऽवर्व्रततः । कृणवः[5] । वपूंषि ॥ ८ ॥

अर्धमर्धेन पयसा पृणक्ष्य[6]र्धेन शुष्म वर्धसे अमुर[7] ।
अविं वृधाम शग्मियं सखायं वरुणं पुत्रमदित्या इषिरम् ।
कविशस्तान्यस्मै वपूंष्यवोचाम रोदसी सत्यवाचा ॥ ९ ॥

अर्धम् । अर्धेन । पयसा । पृणक्षि । अर्धेन । शुष्म । वर्धसे । अमुर ।
अविम्[8] । वृधाम । शग्मियम् । सखायम् । वरुणम् । पुत्रम् । अदित्याः । इषिरम् ।

---

१ So A B B^h D K K^m R S^m V Dc Cs. P P^2 J Cp उपमस्य ।. २ A B B^h Bp D K K^m R S^m V Dc Cs नीडे. K V P J Cp नीडे ।. We with P^2. ३ D Cs तन्व३ तत्. B Bp R S^m तन्वा३स्तत्. A B^h तन्व३स्तत्. We with K K^m. ४ So all our authorities. Rw आवव्रृततः. ५ P कृण्वः ।. ६ B B^h K K^m V Dc Cs Cp पू°. We with A D R S^m. P J पृणक्षि changed from पृणक्षि ।. P^2 V पृणक्षि ।. ७ S^m Cs अमूर. We with A B^h D K K^m R Dc P P^2 J Cp. ८ So A B B^h D K K^m R S^m V Dc Cs J. P अविंवृधाम् ।. P^2 अविंऽवृधाम् ।. J अविम् । वृधाम । changed to अविंवृधाम ।. K Cp अविंवृधाम ।. V अविम् । वृधाम् ।.

कविऽशस्तानि । अस्मै । वपूंषि । अवोचाम । रोदसी इति । सत्यऽवाचा ॥ ९ ॥

इति प्रथमेऽनुवाके प्रथमं सूक्तम् ॥

“तदिद् आस” इति सूक्तस्य विनियोगः पूर्वसूक्तेन सह उक्तः ॥
तथा सर्वफलकामोऽनेन सूक्तेन [illegible] । “तदिद् आस [५. २] धीती वा [७. १] इन्द्रासोमा” इति [कौ० ५. १०] ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यदेनं मदन्ति विश्व ऊमाः ॥ १ ॥
तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यतः । जज्ञे । उग्रः । त्वेषऽनृम्णः ।
सद्यः । जज्ञानः । नि । रिणाति । शत्रून् । अनु । यम् । एनम् । मदन्ति । विश्वे । ऊमाः ॥ १ ॥

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ २ ॥
ववृधानः । शवसा । भूरिऽओजाः । शत्रुः । दासाय । भियसम् । दधाति ।
अविऽअनत् । च । विऽअनत् । च । सस्नि । सम् । ते । नवन्त । प्रऽभृता । मदेषु ॥ २ ॥

त्वे क्रतुमपि पृञ्चन्ति भूरि द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥३॥
त्वे इति । क्रतुम् । अपि । पृञ्चन्ति । भूरि । द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः ।
स्वादोः । स्वादीयः । स्वादुना । सृज । सम् । अदः । सु । मधु । मधुना । अभि ।
योधीः ॥ ३ ॥

यदि चिन्नु त्वा धना जयन्तं रणेरणे अनुमदन्ति विप्राः ।
ओजीयः शुष्मिन्त्स्थिरमा तनुष्व मा त्वा दभन्दुरेवासः कशोकाः ॥४॥
यदि । चित् । नु । त्वा । धना । जयन्तम् । रणेऽरणे । अनुऽमदन्ति । विप्राः ।
ओजीयः । शुष्मिन् । स्थिरम् । आ । तनुष्व । मा । त्वा । दभन् । दुःऽएवासः । कशोकाः ॥४॥

त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥ ५ ॥

---

१ D Cs सस्नि. P सस्ति ।. We with A B K K̈ R S̈ V Dc P J Cp. २ Cs पृचंति.
३ K K̈ V शुष्मिन्स्थि°. We with A B̈ D R S̈ Dc Cs. P शुष्मिन् ।.

त्वया । वयम् । शाशद्महे । रणेषु । प्रऽपश्यन्तः । युधेन्यानि । भूरि ।
चोदयामि । ते । आयुधा । वचःऽभिः । सम् । ते । शिशामि । ब्रह्मणा । वयांसि ॥ ५ ॥

नि तद् दधिषेवरे परे च यस्मिन्नाविथावसा दुरोणे ।
आ स्थापयत मातरं जिगत्नुमत इन्वत कर्वराणि भूरि ॥ ६ ॥

नि । तत् । दधिषे[1] । अवरे । परे । च । यस्मिन् । आविथ । अवसा । दुरोणे ।
आ । स्थापयत । मातरम् । जिगत्नुम् । अतः । इन्वत । कर्वराणि । भूरि ॥ ६ ॥

स्तुष्व वर्ष्मन् पुरुवर्त्मानं समृभ्वाणमिनतममाप्तमाप्त्यानाम्[2] ।
आ दर्शति शवसा भूर्योजाः प्र सक्षति प्रतिमानं पृथिव्याः ॥ ७ ॥

स्तुष्व । वर्ष्मन् । पुरुऽवर्त्मानम् । सम् । ऋभ्वाणम् । इनऽतमम् । आप्तम् । आप्त्यानाम् ।
आ । दर्शति । शवसा । भूरिऽओजाः । प्र । सक्षति । प्रतिऽमानम् । पृथिव्याः ॥ ७ ॥

इमा ब्रह्म बृहद्दिवः कृणवदिन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजा तुरश्चिद् विश्वमर्णवत् तपस्वान् ॥ ८ ॥

इमा । ब्रह्म । बृहत्ऽदिवः । कृणवत् । इन्द्राय । शूषम् । अग्रियः । स्वःऽसाः ।
महः । गोत्रस्य । क्षयति । स्वऽराजा । तुरः[3] । चित् । विश्वम् । अर्णवत् । तपस्वान् ॥ ८ ॥

एवा महान् बृहद्दिवो अथर्वावोचत् स्वां तन्वमिन्द्रमेव[4] ।
स्वसारौ मातरिभ्वरी अरिप्रे हिन्वन्ति चैने शवसा वर्धयन्ति च ॥ ९ ॥

एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वाम् । तन्वम्[5] । इन्द्रम् । एव ।
स्वसारौ । मातरिभ्वरी इति[6] । अरिप्रे इति । हिन्वन्ति । च । एने इति । शवसा । वर्धयन्ति । च ॥ ९ ॥

इति प्रथमेनुवाके द्वितीयं सूक्तम् ॥

१ P V दृधिषे ।. Cp दृधिषे । changed to दृधिषे ।. We with P̊[2] J. २ K̊[m] °माप्त्यमा°. We with A B̊[h] D K R S̊[m] V Dc Cs P P̊[2] J Cp. ३ P तुरः ।. P̊[2] तुरम् ।. We with K V J Cp. ४ A B D तन्व१°. S̊[m] तन्व१°. Dc तन्वा१°. R Cs K̊[m] तन्वा१°. We with B̊[h] K V. ५ So we with A B Bp D K K̊[m] R S̊[m] V Dc Cs P P̊[2] J Cp. See Rw. ६ K adds मातरिभ्वरी after इति. We with P P̊[2] J V Cp.

दर्शपूर्णमासयोः समिदाधाने "ममाग्ने वर्चः" इति सूक्तस्य विनियोगः । तद् उक्तं कौशिकेन । "ममाग्ने वर्च इति समिध आदधाति" इति [कौ० १.१] ॥

तथा वर्चस्यकर्मणि अस्य सूक्तस्य विनियोगः । "ये त्रिषप्ताः ममाग्ने वर्च इति वर्चस्यानि" इत्यादि [कौ० २.३] सूत्रम् । सूत्रार्थः "ये त्रिषप्ताः" इति सूक्ते [१.१] द्रष्टव्यः ॥

तथा पुष्टिकर्मणि अस्य सूक्तस्य विनियोगः । तत्र "ममाग्ने वर्च इति सानि हात" इत्यादि सूत्रम् [कौ० ३.५] ॥

तथा विभागकर्मणि तत्कालानावम् इत्यत्र पिता अनेन सूक्तेन बैल्वकस्य रज्जुम् अभिमन्त्र्य धारयति हस्तेन । "ममाग्ने वर्च विभक्ष्यमाणः प्रमन्तरज्जुं धारयति" [कौ० ५.२] इति सूत्रात् ॥ विभक्ष्यमाणः विभागं करिष्यन् । प्रमन्तरज्जुः आह्निकाणाम् तत्प्रकरणम् ॥

तथा आभिचारिके कर्मणि अनेन सूक्तेन बृहत्पलाशिरसम् ओदनं पुष्पाकेनोपसिञ्चेत् । तद् उक्तं कौशिकेन । "ममाग्ने वर्च बृहत्पलाशिरसं पुष्पाकेनोपसिञ्च" इति [कौ० ६.३] ॥

तथा "कौबेरीं धनकामस्य धनक्षये च" इति [न० क० १७] विहितायां कौबेर्यां महाशान्तौ एतत् सूक्तं योजयेत् । तद् उक्तं नक्षत्रकल्पे । "ममाग्ने वर्च इति कौबेर्याम्" इति [न० क० १८] ॥

तथा हस्त्यश्वदीक्षाख्ये कर्मणि अनेन सूक्तेन जुहुयात् । तद् उक्तं परिशिष्टे । "ममाग्ने वर्चः इति जुहुयात्" [प० १६] १ ॥ अन्यत्रापि व्रतग्रहणादौ अस्य सूक्तस्य विनियोगः ॥

**ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।**
**मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ १ ॥**

मम । अग्ने । वर्चः । विऽहवेषु । अस्तु । वयम् । त्वा । इन्धानाः । तन्वम् । पुषेम ।
मह्यम् । नमन्ताम् । प्रऽदिशः । चतस्रः । त्वया । अधिऽअक्षेण । पृतनाः । जयेम ॥ १ ॥

**अग्ने मन्युं प्रतिनुदन् परेषां त्वं नो गोपाः परि पाहि विश्वतः ।**
**अपाञ्चो यन्तु निवता दुरस्यवोमैषां चित्तं प्रबुधां वि नेशत् ॥ २ ॥**

अग्ने । मन्युम् । प्रतिऽनुदन् । परेषाम् । त्वम् । नः । गोपाः । परि । पाहि । विश्वतः ।
अपाञ्चः । यन्तु । निऽवता । दुरस्यवः । अमा । एषाम् । चित्तम् । प्रऽबुधाम् । वि ।
नेशत् ॥ २ ॥

**मम देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः ।**
**ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामायास्मै ॥ ३ ॥**

मम । देवाः । विऽहवे । सन्तु । सर्वे । इन्द्रऽवन्तः । मरुतः । विष्णुः । अग्निः ।
मम । अन्तरिक्षम् । उरुऽलोकम् । अस्तु । मह्यम् । वातः । पवताम् । कामाय । अस्मै ॥ ३ ॥

**मह्यं यजन्तां मम यानीष्टाकूतिः सत्या मनसो मे अस्तु ।**
**एनो मा नि गां कतमच्चनाहं विश्वे देवा अभि रक्षन्तु मेह ॥ ४ ॥**

१ K R °वत्त. We with A B D K S V Dc Cs P P J Cp.

मह्यम् । यजन्ताम् । मम । यानि । इष्टा । आऽकूतिः । सत्या । मनसः । मे । अस्तु ।
एनः । मा । नि । गाम् । कतमत् । चन । अहम् । विश्वे । देवाः । अभि । रक्षन्तु । मा ।
इह ॥ ४ ॥

मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैवा होतारः सनिषन्[1] न एतदरिष्टाः[2] स्याम तन्वा सुवीराः ॥ ५ ॥

मयि । देवाः । द्रविणम् । आ । यजन्ताम् । मयि । आऽशीः । अस्तु । मयि । देवऽहूतिः ।
दैवाः । होतारः । सनिषन् । नः । एतत् । अरिष्टाः । स्याम । तन्वा । सुऽवीराः ॥ ५ ॥

दैवीः[3] षडुर्वीरुरु नः[4] कृणोत विश्वे देवास इह मादयध्वम् ।
मा नो विददभिभा मो अशस्तिर्मा नो विदद् वृजिना द्वेष्या या ॥ ६ ॥

दैवीः[3] । षट्[5] । उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः । इह । मादयध्वम् ।
मा । नः । विदत् । अभिऽभाः । मो इति । अशस्तिः । मा । नः । विदत् । वृजिना ।
द्वेष्या । या ॥ ६ ॥

तिस्रो[6] देवीर्महि नः शर्म यच्छत प्रजायै नस्तन्वे३ यच्च पुष्टम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ७ ॥

तिस्रः[6] । देवीः । महि । नः । शर्म । यच्छत । प्रऽजायै । नः । तन्वे । यत् । च । पुष्टम् ।
मा । हास्महि । प्रऽजया । मा । तनूभिः । मा । रधाम । द्विषते । सोम[7] । राजन् ॥ ७ ॥

उरुव्यचा नो महिषः शर्म यच्छत्वस्मिन् हवे पुरुहूतः पुरुक्षु ।
स नः प्रजायै हर्यश्व मृडेन्द्र मा नो रीरिषो मा परा दाः ॥ ८ ॥

उरुऽव्यचाः । नः । महिषः । शर्म । यच्छतु । अस्मिन् । हवे । पुरुऽहूतः । पुरुऽक्षु ।
सः । नः । प्रऽजायै । हरिऽअश्व । मृड । इन्द्र । मा । नः । रिरिषः । मा । परा । दाः ॥ ८ ॥

धाता विधाता भुवनस्य यस्पतिर्देवः सविताभिमातिषाहः ।
आदित्या रुद्रा अश्विनोभा देवाः पान्तु यजमानं निर्ऋथात् ॥ ९ ॥

---

१ S^m सनिषन्. २ B B^h D K K^m S^m Cs °रिष्ठा स्याम. We with A R V Dc. ३ Dc देवीः. P^2 देवीः ।. ४ A D K^m R S^m णः. We with B^h K Dc V. ५ K P षट् ।. We with P^2 J V Cp. ६ So all our authorities. ७ P सोमऽराजन् ।. We with K P^2 J Cp.

धाता । विऽधाता । भुवनस्य । यः । पतिः । देवः । सविता । अभिमातिऽसहः ।
आदित्याः । रुद्राः । अश्विना । उभा । देवाः । पान्तु । यजमानम् । निःऽऋथात् ॥ ९ ॥

ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामह एनान् ।
आदित्या रुद्रा उपरिस्पृशो न उग्रं चेत्तारमधिराजमक्रत ॥ १० ॥

ये । नः । सऽपत्नाः । अप । ते । भवन्तु । इन्द्राग्निऽभ्याम् । अव । बाधामहे । एनान् ।
आदित्याः । रुद्राः । उपरिऽस्पृशः । नः । उग्रम् । चेत्तारम् । अधिऽराजम् । अक्रत ॥ १० ॥

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद् धनजिदश्वजिद् यः ।
इमं नो यज्ञं विहवे शृणोत्वस्माकमभूर्हर्यश्व मेदी ॥ ११ ॥

अर्वाञ्चम् । इन्द्रम् । अमुतः । हवामहे । यः । गोऽजित् । धनऽजित् । अश्वऽजित् । यः ।
इमम् । नः । यज्ञम् । विऽहवे । शृणोतु । अस्माकम् । अभूः । हरिऽअश्व । मेदी ॥ ११ ॥

इति प्रथमेनुवाके तृतीयं सूक्तम् ॥

"यो गिरिष्वजायथाः" इति सूक्तेन राजयक्ष्मकुष्ठादिरोगशान्त्यर्थं कुष्ठचूर्णमिश्रितं नवनीतम् अभिमन्त्र्य प्रतिलोमं व्याधितशरीरं प्रलिम्पेत् । "कुष्ठलिङ्गाभिर्नवनीतमिश्रेणाप्रतीहारं प्रलिम्पति" इति [ कौ० ४.४ ] सूत्रात् ॥

यो गिरिष्वजायथा वीरुधां बलवत्तमः ।
कुष्ठेहि तक्मनाशन तक्मानं नाशयन्नितः ॥ १ ॥

यः । गिरिषु । अजायथाः । वीरुधाम् । बलवत्ऽतमः ।
कुष्ठ । आ । इहि । तक्मऽनाशन । तक्मानम् । नाशयन् । इतः ॥ १ ॥

सुपर्णसुवने गिरौ जातं हिमवतस्परि ।
धनैरभि श्रुत्वा यन्ति विदुर्हि तक्मनाशनम् ॥ २ ॥

सुपर्णऽसुवने । गिरौ । जातम् । हिमऽवतः । परि ।
धनैः । अभि । श्रुत्वा । यन्ति । विदुः । हि । तक्मऽनाशनम् ॥ २ ॥

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि ।
तत्रामृतस्य चक्षणं देवाः कुष्ठमवन्वत ॥ ३ ॥

अश्वत्थः । देवऽसदनः । तृतीयस्याम् । इतः । दिवि ।
तत्र । अमृतस्य । चक्षणम् । देवाः । कुष्ठम् । अवन्वत ॥ ३ ॥

१ D ॰स्पर्शो. २ P तक्मऽनाशन ।.

हिरण्ययी नौरचरद्धिरण्यबन्धना दिवि ।
तत्रामृतस्य पुष्पं देवाः कुष्ठमवन्वत ॥ ४ ॥

हिरण्ययी । नौः । अचरत् । हिरण्यऽबन्धना । दिवि ।
तत्र । अमृतस्य । पुष्पम् । देवाः । कुष्ठम् । अवन्वत ॥ ४ ॥

हिरण्ययाः पन्थान आसन्नरित्राणि हिरण्यया ।
नावो हिरण्ययीरासन् याभिः कुष्ठं निरावहन् ॥ ५ ॥

हिरण्ययाः । पन्थानः । आसन् । अरित्राणि । हिरण्यया ।
नावः । हिरण्ययीः । आसन् । याभिः । कुष्ठम् । निःऽआवहन् ॥ ५ ॥

इमं मे कुष्ठ पूरुषं तमा वह तं निष्कुरु ।
तमु मे अगदं कृधि ॥ ६ ॥

इमम् । मे । कुष्ठ । पुरुषम् । तम् । आ । वह । तम् । निः । कुरु ।
तम् । ऊं इति । मे । अगदम् । कृधि ॥ ६ ॥

देवेभ्यो अधि जातोऽसि सोमस्यासि सखा हितः ।
स प्राणाय व्यानाय चक्षुषे मे अस्मै मृड ॥ ७ ॥

देवेभ्यः । अधि । जातः । असि । सोमस्य । असि । सखा । हितः ।
सः । प्राणाय । विऽआनाय । चक्षुषे । मे । अस्मै । मृड ॥ ७ ॥

उदङ् जातो हिमवतः स प्राच्यां नीयसे जनम् ।
तत्र कुष्ठस्य नामान्युत्तमानि वि भेजिरे ॥ ८ ॥

उदङ् । जातः । हिमऽवतः । सः । प्राच्याम् । नीयसे । जनम् ।
तत्र । कुष्ठस्य । नामानि । उत्ऽतमानि । वि । भेजिरे ॥ ८ ॥

उत्तमो नाम कुष्ठास्युत्तमो नाम ते पिता ।
यक्ष्मं च सर्वं नाशय तक्मानं चारसं कृधि ॥ ९ ॥

उत्ऽतमः । नाम । कुष्ठ । असि । उत्ऽतमः । नाम । ते । पिता ।

---

१ R हिरण्मयी. २ J पुष्यं° ।. ३ B^h R पुरुषं. ४ A R जातोसि. We with B^h D K K^m S^m V Dc Cs. ५ Such is the accent of all our authorities.

यक्ष्मम् । च । सर्वम् । नाशय । तक्मानम् । च । अरसम् । कृधि ॥ ९ ॥

शीर्षामयमुपहत्यामक्ष्योस्तन्वो३ रपः ।

कुष्ठस्तत् सर्वं निष्करद् दैवं समह वृष्ण्यम् ॥ १० ॥

शीर्षऽआमयम् । उपऽहत्याम् । अक्ष्योः । तन्वः । रपः ।

कुष्ठः । तत् । सर्वम् । निः । करत् । दैवम् । समह । वृष्ण्यम् ॥ १० ॥

इति प्रथमेनुवाके चतुर्थं सूक्तम् ॥

शस्त्राद्यभिघाते "रात्री माता" इति सूक्तेन दुग्धे लाक्षां क्वाथयित्वा अभिमन्त्र्य पाययति । तथा च सूत्रम् । "लाक्षालिङ्गाभिर्दुग्धे फाण्टान् पाययति" [कौ० ४. ४] इति ॥

रात्री माता नभः पितार्यमा ते पितामहः ।

सिलाची नाम वा असि सा देवानामसि स्वसा ॥ १ ॥

रात्री । माता । नभः । पिता । अर्यमा । ते । पितामहः ।

सिलाची । नाम । वै । असि । सा । देवानाम् । असि । स्वसा ॥ १ ॥

यस्त्वा पिबति जीवति त्रायसे पुरुषं त्वम् ।

भर्त्री हि शश्वतामसि जनानां च न्यञ्चनी ॥ २ ॥

यः । त्वा । पिबति । जीवति । त्रायसे । पुरुषम् । त्वम् ।

भर्त्री । हि । शश्वताम् । असि । जनानाम् । च । निऽअञ्चनी ॥ २ ॥

वृक्षंवृक्षमा रोहसि वृषण्यन्तीव कन्यला ।

जयन्ती प्रत्यातिष्ठन्ती स्परणी नाम वा असि ॥ ३ ॥

वृक्षम्ऽवृक्षम् । आ । रोहसि । वृषण्यन्तीऽइव । कन्यला ।

जयन्ती । प्रतिऽआतिष्ठन्ती । स्परणी । नाम । वै । असि ॥ ३ ॥

यद् दण्डेन यदिष्वा यद् वारुर्हरसा कृतम् ।

---

१ A B B$^h$ D R S$^m$ Cs °मक्षो°. P P$^2$ J Cp अक्षोः ।. Dc °मक्षो° changed to °मक्ष्यो°. We with K K$^m$ V and Dc. २ K K$^m$ V १ for ३. We with A B$^h$ D R S$^m$ Dc Cs. ३ R Dc निर्क°. We with A B$^h$ D K K$^m$ S$^m$ V Cs. ४ P असि ।. We with V P$^2$ J Cp. ५ B Bp K K$^m$ V Dc P स्परणी. Cs स्य° changed to स्प°. We with D R P$^2$ J Cp.

तस्य त्वमसि निष्कृतिः सेमं निष्कृधि पूरुषम् ॥ ४ ॥

यत् । दण्डेन । यत् । इष्वा । यत् । वा । अरुः । हरसा । कृतम् ।
तस्य । त्वम् । असि । निःऽकृतिः । सा । इमम् । निः । कृधि । पुरुषम् ॥ ४ ॥

भद्रात् प्लक्षान्निस्तिष्ठस्यश्वत्थात् खदिराद्धवात् ।
भद्रान्न्यग्रोधात् पर्णात् सा न एह्यरुन्धति ॥ ५ ॥

भद्रात् । प्लक्षात् । निः । तिष्ठसि । अश्वत्थात् । खदिरात् । धवात् ।
भद्रात् । न्यग्रोधात् । पर्णात् । सा । नः । आ । इहि । अरुन्धति ॥ ५ ॥

हिरण्यवर्णे सुभगे सूर्यवर्णे वपुष्टमे ।
रुतं गच्छासि निष्कृते निष्कृतिर्नाम वा असि ॥ ६ ॥

हिरण्यऽवर्णे । सुऽभगे । सूर्यऽवर्णे । वपुःऽतमे ।
रुतम् । गच्छासि । निःऽकृते । निःऽकृतिः । नाम । वै । असि ॥ ६ ॥

हिरण्यवर्णे सुभगे शुष्मे लोमशवक्षणे ।
अपामसि स्वसा लाक्षे वातो हात्मा बभूव ते ॥ ७ ॥

हिरण्यऽवर्णे । सुऽभगे । शुष्मे । लोमशऽवक्षणे ।
अपाम् । असि । स्वसा । लाक्षे । वातः । ह । आत्मा । बभूव । ते ॥ ७ ॥

सिलाची नाम कानीनोजबभ्रु पिता तव ।
अश्वो यमस्य यः श्यावस्तस्य हास्नास्युक्षिता ॥ ८ ॥

सिलाची । नाम । कानीनः । अजऽबभ्रु । पिता । तव ।
अश्वः । यमस्य । यः । श्यावः । तस्य । ह । अस्ना । असि । उक्षिता ॥ ८ ॥

अश्वस्यास्नः संपतिता सा वृक्षाँ अभि सिष्यदे ।
सरा पतत्रिणी भूत्वा सा न एह्यरुन्धति ॥ ९ ॥

---

१ R Dc निःकृतिः. We with A B D K K S V Cs. २ R Dc निःकृधि. We with A B D K K S V Cs. ३ R Dc निःकृते. We with A B D K K S V Cs. ४ R Dc निः-कृति°. We with A B D K K S V Cs. ५ S नाम. B नाम changed to नाम. ६ R °बभ्रुः. ७ Cs शाव°. ८ K अजंबभ्रु।. ९ K P आस्रा।. १० B R S वृक्षँ. We with A B D K K V Dc Cs.

अश्वस्य । अस्रः । सम्ऽपतिता । सा । वृक्षान् । अभि । सिस्यदे ।

सरा । पतत्रिणी । भूत्वा । सा । नः । आ । इहि । अरुन्धति ॥ ९ ॥

प्रथमेनुवाके पञ्चमं सूक्तम् ॥

इति प्रथमोनुवाकः ॥

रोगिण आरोग्यविज्ञानकर्मणि "ब्रह्म जज्ञानम्" इति सूक्तेन तिस्रः आतरज्जूरभिमन्त्र्य अङ्गारेषु निदधाति । यदि अङ्गारस्थास्ता ऊर्ध्वं गच्छन्ति ततो जीविष्यतीति ज्ञेयम् । तद् उक्तं कौशिकेन । "ब्रह्म जज्ञानम् इति जीवितविज्ञानम् । तिस्रः आतरज्जूरङ्गारेष्वाधायोत्क्रामन्तीषु कल्याणम्" इति [कौ० २.६] ॥

तथा सांग्रामिकविज्ञानकर्मणि अनेन सूक्तेन तिस्रः आतरज्जूरभिमन्त्र्य एका आत्मसेना रज्जुः द्वितीया मध्ये मृत्युः तृतीया रज्जुः परसेनेति संकल्प्य अङ्गारेषु निदधाति । यस्या उपरि मृत्युर्गच्छति तस्याः पराजयो भवति । या मृत्योरुपरि पतति तस्या जयो भवति । या संमुखा याति तस्या अपि जयो भवति ॥

तथा तत्रैव कर्मणि रज्जुम् एकाम् अभिमन्त्र्य अङ्गारेषु निदधाति । एवम् इषीकाः ॥

तद् उक्तं कौशिकेन । "सांग्रामिकम् । एता व्यादिशति । मध्ये मृत्युरितरे सेने । पराजेष्यमाणां मृत्युरभिवर्तते । जेष्यन्ती "मृत्युम् । अभ्युत्कुर्वत्सु मुख्या हन्यन्ते मध्येषु मध्या अन्तेष्वन्तरे । एवम् इषीकाः" इति [कौ० २.६] ॥

सलिलगणे अस्य सूक्तस्य पाठः । तद् "आपो हि ष्ठा" इति सूक्ते [१.५] द्रष्टव्यम् ॥

तथा प्रवत्स्यन् अनेन सूक्तेन हवींषि जुहुयात् । आज्यपलाशादिसमित्पुरोडाशपयउदौदनपायसपशुव्रीहियवतिलधानाकरम्भशष्कुल्यः एतानि हवींषि विकल्पेन जुहुयाद् इत्यर्थः । तद् उक्तं कौशिकेन । "द्वितीयेन प्रवत्स्यन् हविषाम् उपदधाति" इति [कौ० ३.१] ॥

तथा सर्वाप्रमत्तदोषे सुतिकारोगे च अनेन सूक्तेन अन्नम् अभिमन्त्र्य ददाति । तथा मधुमन्थम् अभिमन्त्र्य पाययति । अनेनैव सूक्तेन उपस्थानम् आदित्यस्य । तद् उक्तं कौशिकेन । "ब्रह्म जज्ञानम् इति सुतिकारिष्टकौ प्रपाययति । मन्थाचमनोपस्थानम् आदित्यस्य" इति [कौ० ४.४] ॥

ब्रह्म जज्ञानं प्रथमं पुरस्ताद् वि सीमतः सुरुचो वेन आवः ।

स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥ १ ॥

ब्रह्म । जज्ञानम् । प्रथमम् । पुरस्तात् । वि । सीमतः । सुऽरुचः । वेनः । आवः ।

सः । बुध्न्याः । उपऽमाः । अस्य । विऽस्थाः । सतः । च । योनिम् । असतः । च । वि ।

वः ॥ १ ॥

अनाप्ता ये वः प्रथमा यानि कर्माणि चक्रिरे ।

वीरान् नो अत्र मा दभन् तद् व एतत् पुरो दधे ॥ २ ॥

अनाप्ताः । ये । वः । प्रथमाः । यानि । कर्माणि । चक्रिरे ।

वीरान् । नः । अत्र । मा । दभन् । तत् । वः । एतत् । पुरः । दधे ॥ २ ॥

सहस्रंधार एव ते समंस्वरन् दिवो नाके मधुंजिह्वा असश्चतः ।
तस्य स्पशो न नि मिषन्ति भूर्णयः पदेपंदे पाशिनंः सन्ति सेतंवे ॥ ३ ॥
सहस्रंऽधारे । एव । ते । सम् । अस्वंरन् । दिवः । नाके । मधुंऽजिह्वाः । असश्चतः ।
तस्यं । स्पशः । न । नि । मिषन्ति । भूर्णयः । पदेऽपंदे । पाशिनंः । सन्ति । सेतंवे ॥ ३ ॥

पर्यू षु प्र धन्वा वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तदध्यर्णवेनेयसे सनिस्रसो नामासि त्रयोदशो मास इन्द्रस्य गृहः॥४॥
परि । ऊं इति । सु । प्र । धन्व । वाजंऽसातये । परि । वृत्राणि । सक्षणिः ।
द्विषः । तत् । अधि । अर्णवेन । ईयसे । सनिस्रंसः । नाम । असि । त्रयःऽदशः । मासः ।
इन्द्रस्य । गृहः ॥ ४ ॥

न्वे३तेनारात्सीरसौ स्वाहा ।
तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृडतं नः ॥ ५ ॥
नु । एतेन । अरात्सीः । असौ । स्वाहा ।
तिग्मऽआयुधौ । तिग्महेती इति तिग्मऽहेती । सुऽशेवौ । सोमारुद्रौ । इह । सु । मृड-
तम् । नः ॥ ५ ॥

अवैतेनारात्सीरसौ स्वाहा । तिग्मा० ॥ ६ ॥
अव । एतेन० ।० ॥ ६ ॥

अपैतेनारात्सीरसौ स्वाहा ।
तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृडतं नः ॥ ७ ॥
अप । एतेन । अरात्सीः । असौ । स्वाहा ।
तिग्मऽआयुधौ । तिग्महेती इति तिग्मऽहेती । सुऽशेवौ । सोमारुद्रौ । इह । सु । मृड-
तम् । नः ॥ ७ ॥

मुमुक्तमस्मान्दुरितादवद्याज्जुषेथां यज्ञममृतमस्मासु धत्तम् ॥ ८ ॥

---

१ P अश्वरन् ।. २ P² सनिस्रसः ।. ३ A K K^m V न्वे १. S^m न्वे १. We with B^h D R Dc Cs. ४ B^h Dc °मस्माद्दु°. A °मस्मान्दु° changed to °मस्माद्दु°. Cs °स्मांदु°. K K^m R V °मस्माद्दु°. P P² J Cp अस्मात् ।. We with D S^m. ५ S^m धत्ताम्. P धत्ताम् ।. We with A B^h D K K^m R Dc Cs P² J Cp.

मुमुक्तम् । अस्मान् । दुःऽइनात् । अवद्यात् । जुषेथाम् । यज्ञम् । अमृतम् । अस्मासु । धत्तम् ॥ ८ ॥

चक्षुषो हेते मनसो हेते ब्रह्मणो हेते तपसश्च हेते ।
मेन्या मेनिरस्यमेनयस्ते सन्तु ये३स्माँ अभ्यघायन्ति ॥ ९ ॥

चक्षुषः । हेते । मनसः । हेते । ब्रह्मणः । हेते । तपसः । च । हेते ।
मेन्याः । मेनिः । असि । अमेनयः । ते । सन्तु । ये । अस्मान् । अभिऽअघायन्ति ॥ ९ ॥

यो३स्मांश्चक्षुषा मनसा चित्त्याकूत्या च यो अघायुरभिदासात् ।
त्वं तानग्ने मेन्यामेनीन् कृणु स्वाहा ॥ १० ॥

यः । अस्मान् । चक्षुषा । मनसा । चित्त्या । आऽकूत्या । च । यः । अघऽयुः । अभिऽदासात् ।
त्वम् । तान् । अग्ने । मेन्या । अमेनीन् । कृणु । स्वाहा ॥ १० ॥

इन्द्रस्य गृहोसि । तं त्वा प्र पद्ये तं त्वा प्र विशामि सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनूः सह यन्मेस्ति तेन ॥ ११ ॥

इन्द्रस्य । गृहः । असि ॥ तम् । त्वा । प्र । पद्ये । तम् । त्वा । प्र । विशामि । सर्वऽगुः । सर्वऽपुरुषः । सर्वऽआत्मा । सर्वऽतनूः । सह । यत् । मे । अस्ति । तेन ॥ ११ ॥

इन्द्रस्य शर्मासि ।० ॥ १२ ॥

इन्द्रस्य । शर्म । असि ॥० ॥ १२ ॥

इन्द्रस्य वर्मासि ।० ॥ १३ ॥

इन्द्रस्य । वर्म । असि ॥० ॥ १३ ॥

इन्द्रस्य वरूथमसि । तं त्वा प्र पद्ये तं त्वा प्र विशामि सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनूः सह यन्मेस्ति तेन ॥ १४ ॥

इन्द्रस्य । वरूथम् । असि ॥ तम् । त्वा । प्र । पद्ये । तम् । त्वा । प्र । विशामि । सर्वऽगुः । सर्वऽपुरुषः । सर्वऽआत्मा । सर्वऽतनूः । सह । यत् । मे । अस्ति । तेन ॥ १४ ॥

इति द्वितीयेनुवाके प्रथमं सूक्तम् ॥

---

१ See foot-note ४ on the previous page. २ K K̈ यै १. S̈ ये १. We with D R Dc Cs. ३ K P omit अ°. ४ B̈ K K̈ V यौ १. Dc यो १. S̈ यो १. Cs योस्मां°. We with D. ५ P̈ आकूत्या ।. We with P J V Cp.

निर्ऋतिकर्मणि "आ नो भर" इति सूक्तेन शर्करामिश्रा धानाः सक्तुञ्जुहोति । "आ नो भरेति धानाः" [कौ° ३. १] इत्यादि सूत्रम् ॥

तथा अर्थोत्थापनविघ्नशमनकर्मणि अस्य सूक्तस्य विनियोगः । सूत्रादिकम् "अयं ते योनिः" इति सूक्ते [३. २०] द्रष्टव्यम् ॥

अग्निचयने वनीवाहने क्रियमाणे इदं सूक्तं यजमानं वाचयति । तद् उक्तं वैताने । "आ नो भरेति वनीवाहने वाचयति" इति [वै° ५. १] ॥ वनीवाहनम् ऋत्विजां भृत्यर्थं वचनम् ॥

**आ नो॑ भर॒ मा परि॑ ष्ठा अराते॒ मा नो॑ रक्षी॒र्दक्षि॑णां नी॒यमा॑नाम् ।**
**नमो॑ वी॒र्त्साया॒ अस॑मृद्धये॒ नमो॑ अ॒स्त्वरा॑तये ॥ १ ॥**

आ । नः॒ । भ॒र॒ । मा । परि॑ । स्थाः॒ । अ॒रा॒ते॒ । मा । नः॒ । र॒क्षीः॒ । दक्षि॑णाम् । नी॒यमा॑नाम् ।
नमः॑ । वि॒ऽई॒र्त्सायै॑ । अस॑म्ऽऋद्धये । नमः॑ । अ॒स्तु॒ । अरा॑तये ॥ १ ॥

**यम॑राते पु॒रोध॒त्से पुरु॑षं परिरा॒पिण॑म् ।**
**नम॑स्ते॒ तस्मै॑ कृण्मो॒ मा व॒निं व्य॑थयी॒र्मम॑ ॥ २ ॥**

यम् । अ॒रा॒ते॒ । पु॒रः॒ऽध॒त्से । पुरु॑षम् । प॒रि॒ऽरा॒पिण॑म् ।
नमः॑ । ते॒ । तस्मै॑ । कृ॒ण्मः॒ । मा । व॒निम् । व्य॒थ॒यीः॒ । मम॑ ॥ २ ॥

**प्र णो॑ व॒निर्दे॒वकृ॑ता॒ दिवा॒ नक्तं॑ च कल्पताम् ।**
**अरा॑तिमनु॒प्रेमो॑ व॒यं नमो॑ अ॒स्त्वरा॑तये ॥ ३ ॥**

प्र । नः॒ । व॒निः॒ । दे॒व॒ऽकृ॑ता । दिवा॑ । नक्त॑म् । च॒ । क॒ल्प॒ता॒म् ।
अरा॑ति॒म् । अ॒नु॒ऽप्रेमः॑ । व॒यम् । नमः॑ । अ॒स्तु॒ । अरा॑तये ॥ ३ ॥

**सर॑स्वती॒मनु॑मतिं॒ भगं॒ यन्तो॑ हवामहे ।**
**वाचं॑ जु॒ष्टां मधु॑मतीमवादिषं दे॒वानां॑ दे॒वहू॑तिषु ॥ ४ ॥**

सर॑स्वतीम् । अनु॑ऽमतिम् । भग॑म् । यन्तः॑ । ह॒वा॒म॒हे॒ ।
वाच॑म् । जु॒ष्टाम् । मधु॑ऽमतीम् । अ॒वा॒दि॒ष॒म् । दे॒वाना॑म् । दे॒वऽहू॑तिषु ॥ ४ ॥

**यं याचा॑म्य॒हं वा॒चा सर॑स्वत्या मनो॒युजा॑ ।**
**श्र॒द्धा तम॒द्य विन्दतु द॒त्ता सोमे॑न ब॒भ्रुणा॑ ॥ ५ ॥**

यम् । याचा॑मि । अ॒हम् । वा॒चा । सर॑स्वत्या । म॒नः॒ऽयुजा॑ ।

---

१ A B B̊ D K K̊ R S̊ Cs अ॒रा॒तिम॑नु॰. Dc अ॒रा॒तिम॑नु॰ changed to अरा॑तिमनु॰. P J K Cr अ॒रा॒तिम् । अ॒नु॒ऽप्रेमः॑ ।. P̊ अरा॑तिम् । अ॒नु॒ऽप्रेमः॑ ।. We with Dc P̊. But should not we read अरा॑ति॒मनु॒ प्रेमो॑ (*pad.* अरा॑तिम् । अनु॑ । प्र । इ॒मः॒ ।)?

श्रद्धा । तम् । अद्य । विन्दन् । दत्ता । सोमेन । बभ्रुणा ॥ ५ ॥

मा वनिं मा वाचं नो वीर्त्सीरुभाविन्द्राग्नी आ भरतां नो वसूनि ।
सर्वे नो अद्य दित्सन्तोरातिं प्रति हर्यत ॥ ६ ॥

मा । वनिम् । मा । वाचम् । नः । वि । ईर्त्सीः । उभौ । इन्द्राग्नी इति । आ । भरताम् । नः । वसूनि ।
सर्वे । नः । अद्य । दित्सन्तः । अरातिम् । प्रति । हर्यत ॥ ६ ॥

परोपेह्यसमृद्धे वि ते हेतिं नयामसि ।
वेद त्वाहं निमीवन्तीं नितुदन्तीमराते ॥ ७ ॥

परः । अप । इहि । असम्ऽऋद्धे । वि । ते । हेतिम् । नयामसि ।
वेद । त्वा । अहम् । निऽमीवन्तीम् । निऽतुदन्तीम् । अराते ॥ ७ ॥

उत नग्ना बोभुवती स्वप्नया सचसे जनम् ।
अराते चित्तं वीर्त्सन्त्याकूतिं पुरुषस्य च ॥ ८ ॥

उत । नग्ना । बोभुवती । स्वप्नऽया । सचसे । जनम् ।
अराते । चित्तम् । विऽईर्त्सन्ती । आऽकूतिम् । पुरुषस्य । च ॥ ८ ॥

या महती महोन्माना विश्वा आशा व्यानशे ।
तस्यै हिरण्यकेश्यै निर्ऋत्या अकरं नमः ॥ ९ ॥

या । महती । महाऽउन्माना । विश्वाः । आशाः । विऽआनशे ।
तस्यै । हिरण्यऽकेश्यै । निःऽऋत्यै । अकरम् । नमः ॥ ९ ॥

हिरण्यवर्णा सुभगा हिरण्यकशिपुर्मही ।
तस्यै हिरण्यद्रापयेरात्या अकरं नमः ॥ १० ॥

हिरण्यऽवर्णा । सुऽभगा । हिरण्यऽकशिपुः । मही ।
तस्यै । हिरण्यऽद्रापये । अरात्यै । अकरम् । नमः ॥ १० ॥

इति द्वितीयेऽनुवाके द्वितीयं सूक्तम् ॥

---

१ A B B^P B̈ R S̈ णो. Dc णो changed to नो. We with D K K̈ V Cs. २ K वि ईर्त्सीः ।. V विऽईर्त्सीः. We with P P̈ J Cp.

अभिचारकर्मणि "वैकङ्कतेन" इति सूक्तेन जुहोति । "वैकङ्कतेति मन्त्रोक्तम्" इति [कौ॰ ६. २] सूत्रात् ॥

वैकङ्कतेनेध्मेन देवेभ्य आज्यं वह ।
अग्ने ताँ इह मादय सर्व आ यन्तु मे हवम् ॥ १ ॥

वैकङ्कतेन । इध्मेन । देवेभ्यः । आज्यम् । वह ।
अग्ने । तान् । इह । मादय । सर्वे । आ । यन्तु । मे । हवम् ॥ १ ॥

इन्द्रा याहि मे हवमिदं करिष्यामि तच्छृणु ।
इम ऐन्द्रा अतिसरा आकूतिं सं नमन्तु मे ।
तेभिः शकेम वीर्यं[२] जातवेदस्तनूवशिन् ॥ २ ॥

इन्द्र । आ । याहि । मे । हवम् । इदम् । करिष्यामि । तत् । शृणु ।
इमे । ऐन्द्राः । अतिऽसराः । आऽकूतिम् । सम् । नमन्तु । मे ।
तेभिः । शकेम । वीर्यम् । जातऽवेदः । तनूऽवशिन् ॥ २ ॥

यदसावमुतो देवा अदेवः संश्चिकीर्षति ।
मा तस्याग्निर्हव्यं वाक्षीद्धवं देवा अस्य मोप गुर्ममैव हवमेतन ॥ ३ ॥

यत् । असौ । अमुतः । देवाः । अदेवः[३] । सन् । चिकीर्षति ।
मा । तस्य । अग्निः । हव्यम् । वाक्षीत् । हवम् । देवाः । अस्य । मा । उप । गुः । मम ।
एव । हवम् । आ । इतन ॥ ३ ॥

अति धावतातिसरा[४] इन्द्रस्य वचसा हत ।
अविं वृक इव मथ्नीत स वो जीवन् मा मोचि प्राणमस्यापि नह्यत ॥४॥

अति । धावत । अतिऽसराः । इन्द्रस्य । वचसा । हत ।
अविम्[५] । वृकःऽइव । मथ्नीत । सः । वः । जीवन् । मा । मोचि । प्राणम् । अस्य ।
अपि । नह्यत ॥ ४ ॥

यममी पुरोदधिरे ब्रह्माणमपभूतये ।
इन्द्र स ते अधस्पदं तं प्रत्यस्यामि मृत्यवे ॥ ५ ॥

---

१ R तँ. २ A B B^h D S^m Cs ३ for १. We with K K^m V. ३ P^2 अदेवः ।. ४ Cs °सरा.
५ P^3 अविम् ।.

यम् । अमी इति । पुरःऽद॒धिरे । ब्रह्माणम् । अपऽभूतये ।

इन्द्र । सः । ते । अधःऽपदम् । तम् । प्रति । अस्यामि । मृत्यवे ॥ ५ ॥

**यदि प्रेयुर्देवपुरा ब्रह्म वर्माणि चक्रिरे ।**

**तनूपानं परिपाणं कृण्वाना यदुपोचिरे सर्वं तदरसं कृधि ॥ ६ ॥**

यदि । प्रऽईयुः । देवऽपुराः । ब्रह्म । वर्माणि । चक्रिरे ।

तनूऽपानम् । परिऽपानम् । कृण्वानाः । यत् । उपऽऊचिरे । सर्वम् । तत् । अरसम् । कृधि ॥ ६ ॥

**यानसावतिसरांश्चकार कृणवच्च यान् ।**

**त्वं तानिन्द्र वृत्रहन् प्रतीचः पुनरा कृधि यथामुं तृणहां जनम् ॥७॥**

यान् । असौ । अतिऽसरान् । चकार । कृणवत् । च । यान् ।

त्वम् । तान् । इन्द्र । वृत्रऽहन् । प्रतीचः । पुनः । आ । कृधि । यथा । अमुम् । तृणहान् । जनम् ॥ ७ ॥

**यथेन्द्र उद्वाचनं लब्ध्वा चक्रे अधस्पदम् ।**

**कृण्वे३ऽहमधरांस्तथामूंछश्वतीभ्यः समाभ्यः ॥ ८ ॥**

यथा । इन्द्रः । उत्ऽवाचनम् । लब्ध्वा । चक्रे । अधःऽपदम् ।

कृण्वे । अहम् । अधरान् । तथा । अमून् । शश्वतीभ्यः । समाभ्यः ॥ ८ ॥

**अत्रैनानिन्द्र वृत्रहन्नुग्रो मर्माणि विध्य ।**

**अत्रैवैनानभि तिष्ठेन्द्र मेद्य१हं तव ।**

**अनु त्वेन्द्रा रभामहे स्याम सुमतौ तव ॥ ९ ॥**

अत्र । एनान् । इन्द्र । वृत्रऽहन् । उग्रः । मर्माणि । विध्य ।

अत्र । एव । एनान् । अभि । तिष्ठ । इन्द्र । मेदी । अहम् । तव ।

अनु । त्वा । इन्द्र । आ । रभामहे । स्याम । सुऽमतौ । तव ॥ ९ ॥

इति द्वितीयेऽनुवाके तृतीयं सूक्तम् ॥

१ KV १ for ३. २ Cs °मूर्न्छ°. ३ P J Cp कृण्वे[। P कृण्व।. We with KV. ४ K R S Dc अत्रैणानिन्द्र. We with A B D K V Cs. ५ A B B D R S ३ for १. We with K K V. ६ P इन्द्र।.

"दिवे स्वाहा" इति सूक्तेन सर्वरोगभैषज्यार्थम् आज्यं हुत्वा सयवे केवले वा उदपात्रे चतुरः संपातान् द्वौ पृथिव्याम् आनीय संपातितमृत्सहितोदकेन सूक्ताभिमन्त्रितेन व्याधितम् आप्लावयेत् । सूत्रितं हि । "दिवे स्वाहा [५.९] इमं यवम् [६.९१] इति चतुर उदपात्रे संपातान् आनयति । द्वौ पृथिव्याम् । तौ प्रत्याहृत्याप्लावयति सयवे च" इति [कौ° ४.४.] ॥

दिवे स्वाहा ॥ १ ॥ पृथिव्यै स्वाहा ॥ २ ॥

दिवे । स्वाहा ॥ १ ॥ पृथिव्यै । स्वाहा ॥ २ ॥

अन्तरिक्षाय स्वाहा ॥ ३ ॥ अन्तरिक्षाय स्वाहा ॥ ४ ॥

अन्तरिक्षाय । स्वाहा ॥ ३ ॥ अन्तरिक्षाय । स्वाहा ॥ ४ ॥

दिवे स्वाहा ॥ ५ ॥ पृथिव्यै स्वाहा ॥ ६ ॥

दिवे । स्वाहा ॥ ५ ॥ पृथिव्यै । स्वाहा ॥ ६ ॥

सूर्यो मे चक्षुर्वातः प्राणो३ऽन्तरिक्षमात्मा पृथिवी शरीरम् ।
अस्तृतो नामाहमयमस्मि स आत्मानं नि दधे द्यावापृथिवीभ्यां गोपीथाय ॥ ७ ॥

सूर्यः । मे । चक्षुः । वातः । प्राणः । अन्तरिक्षम् । आत्मा । पृथिवी । शरीरम् । अस्तृतः । नाम । अहम् । अयम् । अस्मि । सः । आत्मानम् । नि । दधे । द्यावापृथिवीभ्याम् । गोपीथाय ॥ ७ ॥

उदायुरुद् बलमुत् कृतमुत् कृत्यामुन्मनीषामुदिन्द्रियम् ।
आयुष्कृदायुष्पत्नी स्वधावन्तौ गोपा मे स्तं गोपायतं मा ।
आत्मसदौ मे स्तं मा मा हिंसिष्टम् ॥ ८ ॥

उत् । आयुः । उत् । बलम् । उत् । कृतम् । उत् । कृत्याम् । उत् । मनीषाम् । उत् । इन्द्रियम् ।
आयुःऽकृत् । आयुष्पत्नीत्यायुःऽपत्नी । स्वधाऽवन्तौ । गोपा । मे । स्तम् । गोपायतम् । मा । आत्मऽसदौ । मे । स्तम् । मा । मा । हिंसिष्टम् ॥ ८ ॥

द्वितीयेनुवाके चतुर्थं सूक्तम् ॥

"अश्मवर्म मेसि" इति सूक्तेन पत्तनग्रामगृहस्वस्त्ययनार्थं षड् अश्मनः संपातवतः कृत्वा अभिमन्त्र्य चतुर्षु पत्तनादिकोणेषु चतुरो निखनति एकं मध्ये निखनति एकं पत्तनाद्युपरि निदधाति । तद् उक्तं कौशिकेन । "अश्मवर्म मेति षड् अश्मनः संपा-

१ BD K $K^{h}$ $K^{m}$ $S^{m}$ V Cs १ for ३. २ A आयुःकृदा°. ३ A °युःपत्नी.

नवमः स्वस्तिपर्यायस्ताभिरानि " इति , [illegible] " ७. २] ॥ " यो मा दिशाम् " इति सप्तमी ऋ. पर्यायाणां [illegible] द्वितीया कार्या । एवं षड्भिः पञ्च संघाताः कार्या इत्यर्थः ॥

अश्मवर्म मेसि यो मा प्राच्या दिशोऽघायुरभिदासात् ।
एतत् स ऋच्छात् ॥ १ ॥

अश्मऽवर्म । मे । असि । यः । मा । प्राच्याः । दिशः । अघऽयुः । अभिऽदासात् ।
एतत् । सः । ऋच्छात् ॥ १ ॥

अश्मवर्म मेसि यो मा दक्षिणाया दिशः ०।० ॥ २ ॥

०मा । दक्षिणायाः । दिशः ०।० ॥ २ ॥

अश्मवर्म मेसि यो मा प्रतीच्या दिशः ०।० ॥ ३ ॥

०मा । प्रतीच्याः । दिशः ०।० ॥ ३ ॥

अश्मवर्म मेसि यो मोदीच्या दिशः ०।० ॥ ४ ॥

०मा । उदीच्याः । दिशः ०।० ॥ ४ ॥

अश्मवर्म मेसि यो मा ध्रुवाया दिशः ०।० ॥ ५ ॥

०मा । ध्रुवायाः । दिशः ०।० ॥ ५ ॥

अश्मवर्म मेसि यो मोर्ध्वाया दिशोऽघायुः ०।० ॥ ६ ॥

०मा । ऊर्ध्वायाः । दिशः ०।० ॥ ६ ॥

अश्मवर्म मेसि यो मा दिशामन्तर्देशेभ्योऽघायुरभिदासात् ।
एतत् स ऋच्छात् ॥ ७ ॥

अश्मऽवर्म । मे । असि । यः । मा । दिशाम् । अन्तःऽदेशेभ्यः । अघऽयुः । अभिऽदासात् ।
एतत् । सः । ऋच्छात् ॥ ७ ॥

बृहता मन उप ह्वये मातरिश्वना प्राणापानौ ।
सूर्याच्चक्षुरन्तरिक्षाच्छ्रोत्रं पृथिव्याः शरीरम् ।
सरस्वत्या वाचमुप ह्वयामहे मनोयुजा ॥ ८ ॥

बृहता । मनः । उप । ह्वये । मातरिश्वना । प्राणापानौ ।

1 A R दिशोघा°.

सूर्यात् । चक्षुः । अन्तरिक्षात् । श्रोत्रम् । पृथिव्याः । शरीरम् ।
सरस्वत्या । वाचम् । उप । ह्वयामहे । मनःऽयुजा ॥ ८ ॥

द्वितीयेनुवाके पञ्चमं सूक्तम् ॥

इति द्वितीयोनुवाकः ॥

सर्वसंपत्कर्मसु "कथं महे" इति सूक्तेन मादानककाष्ठश्रृतं क्षीरौदनं संपात्य अभिमन्त्र्य अश्नाति ॥

तथा तत्रैव अनेन सूक्तेन चमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्छयित्वा मध्वासिच्य संपात्याभिमन्त्र्य आशयति ॥

तद् उक्तं कौशिकेन । "कथं मह इति मादानकश्रृतं क्षीरौदनम् अश्नाति । चमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्छयित्वा मध्वासिच्याशयति" इति [कौ° २. ३] ॥ मूर्छयित्वा चूर्णीकृत्वा ॥

**कथं महे असुरायाब्रवीरिह कथं पित्रे हरये त्वेषनृम्णः ।**
**पृश्निं वरुण दक्षिणां ददावान् पुनर्मघ त्वं मनसाचिकित्सीः ॥ १ ॥**

कथम् । महे । असुराय । अब्रवीः । इह । कथम् । पित्रे । हरये । त्वेषऽनृम्णः ।
पृश्निम् । वरुण । दक्षिणाम् । ददावान् । पुनःऽमघ । त्वम् । मनसा । अचिकित्सीः ॥ १ ॥

**न कामेन पुनर्मघो भवामि सं चक्षे कं पृश्निमेतामुपाजे ।**
**केन नु त्वमथर्वन् काव्येन केन जातेनासि जातवेदाः ॥ २ ॥**

न । कामेन । पुनःऽमघः । भवामि । सम् । चक्षे । कम् । पृश्निम् । एताम् । उप । अजे ।
केन । नु । त्वम् । अथर्वन् । काव्येन । केन । जातेन । असि । जातऽवेदाः ॥ २ ॥

**सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः ।**
**न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये ॥ ३ ॥**

सत्यम् । अहम् । गभीरः । काव्येन । सत्यम् । जातेन । अस्मि । जातऽवेदाः ।
न । मे । दासः । न । आर्यः । महिऽत्वा । व्रतम् । मीमाय । यत् । अहम् । धरिष्ये ॥ ३ ॥

**न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन् ।**
**त्वं ता विश्वा भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय ॥ ४ ॥**

न । त्वत् । अन्यः । कविऽतरः । न । मेधया । धीरऽतरः । वरुण । स्वधाऽवन् ।
त्वम् । ता । विश्वा । भुवनानि । वेत्थ । सः । चित् । नु । त्वत् । जनः । मायी । बिभाय ॥ ४ ॥

---

१ A D R Š[m] Cs °मथर्वन्. Dc °मर्थ° changed to °मथ°. P J Cr अथर्वन् ।. We with B[h] K K[m] V P[2]. २ D R Š[m] Cs भुवनानि. Dc भुवनानि changed to भुवनानि. P वेत्थ ।. We with A B[h] K K[m] V, and P[2] J Cp.

त्वं ह्य१ङ्ग वरुण स्वधावन् विश्वा वेत्थ जनिमा सुप्रणीते ।
किं रजस एना परो अन्यदस्त्येना किं परेणावरममुर ॥ ५ ॥

त्वम् । हि । अङ्ग । वरुण । स्वधाऽवन् । विश्वा । वेत्थ । जनिम । सुऽप्रनीते ।
किम् । रजसः । एना । परः । अन्यत् । अस्ति । एना । किम् । परेण । अवरम् । अमुर ॥ ५ ॥

एकं रजस एना परो अन्यदस्त्येना पर एकेन दुर्णशं चिदर्वाक् ।
तत् ते विद्वान् वरुण प्र ब्रवीम्यधोवचसः पणयो भवन्तु नीचैर्दासा उप
सर्पन्तु भूमिम् ॥ ६ ॥

एकम् । रजसः । एना । परः । अन्यत् । अस्ति । एना । परः । एकेन । दुःऽनशम् । चित् ।
अर्वाक् ।
तत् । ते । विद्वान् । वरुण । प्र । ब्रवीमि । अधःऽवचसः । पणयः । भवन्तु । नीचैः । दासाः ।
उप । सर्पन्तु । भूमिम् ॥ ६ ॥

त्वं ह्य१ङ्ग वरुण ब्रवीषि पुनर्मघेष्ववद्यानि भूरि ।
मो षु पणीँरभ्ये३तावतो भून्मा त्वा वोचन्नराधसं जनासः ॥ ७ ॥

त्वम् । हि । अङ्ग । वरुण । ब्रवीषि । पुनःऽमघेषु । अवद्यानि । भूरि ।
मो इति । सु । पणीन् । अभि । एतावतः । भूत् । मा । त्वा । वोचन् । अराधसम् । जनासः ॥७॥

मा मा वोचन्नराधसं जनासः पुनस्ते पृश्नि जरितर्ददामि ।
स्तोत्रं मे विश्वमा याहि शचीभिरन्तर्विश्वासु मानुषीषु दिक्षु ॥ ८ ॥

मा । मा । वोचन् । अराधसम् । जनासः । पुनः । ते । पृश्निम् । जरितः । ददामि ।
स्तोत्रम् । मे । विश्वम् । आ । याहि । शचीभिः । अन्तः । विश्वासु । मानुषीषु । दिक्षु ॥ ८ ॥

आ ते स्तोत्राण्युद्यतानि यन्त्वन्तर्विश्वासु मानुषीषु दिक्षु ।
देहि नु मे यन्मे अदत्तो असि युज्यो मे सप्तपदः सखासि ॥ ९ ॥

---

१ B̊ D R S̊ Cs ह्यांग. We with A K K̊ V Dc. २ A K K̊ R S̊ V Dc अन्यदस्त्येना. P̊ J V Cr अस्ति ।. We with B̊ D Cs P. B D, however, have °स्त्येना changed to °स्तेना in this as well as the next verse. ३ A B̊ D K K̊ S̊ Dc अन्यदस्त्येना. V P̊ J Cr अस्ति ।. P अस्ति changed to अस्ति ।. We with R Cs P.

आ । ते । स्तोत्राणि । उत्ऽयतानि । यन्तु । अन्तः । विश्वासु । मानुषीषु । दिक्षु ।
देहि । नु । मे । यत् । मे । अदत्तः । असि । युज्यः । मे । सप्तऽपदः । सखा । असि ॥ ९ ॥

समा नौ[1] बन्धुर्वरुण समा जा वेदाहं तद्यन्नावेषा समा जा ।
ददामि तद् यत् ते अदत्तो अस्मि युज्यस्ते सप्तपदः सखास्मि ॥ १० ॥

समा । नौ । बन्धुः । वरुण । समा । जा । वेद । अहम् । तत् । यत् । नौ । एषा । समा । जा ।
ददामि । तत् । यत् । ते । अदत्तः । अस्मि । युज्यः । ते । सप्तऽपदः । सखा । अस्मि ॥ १० ॥

देवो देवाय गृणते वयोधा विप्रो विप्राय स्तुवते सुमेधाः[2] ।
अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं देवबन्धुम् ।
तस्मा उ राधः कृणुहि सुप्रशस्तं सखा नो असि[3] परमं च बन्धुः ॥११॥

देवः । देवाय । गृणते । वयःऽधाः । विप्रः । विप्राय । स्तुवते । सुऽमेधाः ।
अजीजनः । हि । वरुण । स्वधाऽवन् । अथर्वाणम् । पितरम् । देवऽबन्धुम् ।
तस्मै । ऊं इति । राधः । कृणुहि । सुऽप्रशस्तम् । सखा । नः । असि । परमम् । च । बन्धुः ॥ ११ ॥

इति तृतीयेनुवाके प्रथमं सूक्तम् ॥

वशाशमनकर्मणि वपायाश्चत्वारि खण्डानि कृत्वा "समिद्धो अद्य" इति सूक्तेन एकं खण्डं जुहोति । "ऊर्ध्वा अस्य" [५. २७] इति सूक्तेन द्वितीयं खण्डं जुहोति । युक्ताभ्यां सूक्ताभ्यां तृतीयं खण्डम् । अनुमतये स्वाहेति चतुर्थं खण्डं जुहोति । तथा च सूत्रम् । "समिद्ध ऊर्ध्वा अस्येति जुहोति । युक्ताभ्यां तृतीयाम् । आनुमतीं चतुर्थीम्" इति [कौ॰ ५. ९] ॥

समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः ॥ १ ॥

सम्ऽइद्धः । अद्य । मनुषः । दुरोणे । देवः । देवान् । यजसि । जातऽवेदः ।
आ । च । वह । मित्रऽमहः[4] । चिकित्वान् । त्वम् । दूतः । कविः । असि । प्रऽचेताः ॥ १ ॥

तनूनपात् पथ ऋतस्य यानान् मध्वा समञ्जन्त्स्वदया[5] सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥ २ ॥

तनूऽनपात् । पथः । ऋतस्य । यानान् । मध्वा । सम्ऽअञ्जन् । स्वदय । सुऽजिह्व ।
मन्मानि । धीभिः । उत । यज्ञम् । ऋन्धन्[6] । देवऽत्रा । च । कृणुहि । अध्वरम् । नः ॥ २ ॥

---

१ $\overset{h}{B}$ नो. २ All our authorities स्तुवते सुमेधाः. ३ A D omit अ॰. ४ P मित्रऽमहः ।. ५ A B $\overset{h}{B}$ Bp D $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs स्वदया for स्वदया. K स्वधया. P $\overset{2}{P}$ J Cp V स्वदय ।. ६ P ऋद्धन् ।. $\overset{2}{P}$ ऋधन् ।. We with K V J Cp.

आजुह्वान ईड्यो वन्द्यश्चा यांह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान् यक्षीषितो यजीयान् ॥ ३ ॥

आऽजुह्वानः । ईड्यः । वन्द्यः । च । आ । याहि । अग्ने । वसुऽभिः । सऽजोषाः ।
त्वम् । देवानाम् । असि । यह्व । होता । सः । एनान् । यक्षि । इषितः । यजीयान् ॥ ३ ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ ४ ॥

प्राचीनम् । बर्हिः । प्रऽदिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नाम् ।
वि । ऊं इति । प्रथते । विऽतरम् । वरीयः । देवेभ्यः । अदितये । स्योनम् ॥ ४ ॥

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ ५ ॥

व्यचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिऽभ्यः । न । जनयः । शुम्भमानाः ।
देवीः । द्वारः । बृहतीः । विश्वम्ऽइन्वाः । देवेभ्यः । भवत । सुऽप्रायणाः ॥ ५ ॥

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥ ६ ॥

आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । सदताम् । नि । योनौ ।
दिव्ये इति । योषणे इति । बृहती इति । सुरुक्मे इति सुऽरुक्मे । अधि । श्रियम् । शुक्रऽपिशम् । दधाने इति ॥ ६ ॥

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥

दैव्या । होतारा । प्रथमा । सुऽवाचा । मिमाना । यज्ञम् । मनुषः । यजध्यै ।
प्रऽचोदयन्ता । विदथेषु । कारू इति । प्राचीनम् । ज्योतिः । प्रऽदिशा । दिशन्ता ॥ ७ ॥

आ नो यज्ञं भारती तूयमेत्विडा मनुष्वदिह चेतयन्ती ।

१ All our authorities वृज्यसे. २ J बर्हिः ।. P बर्हिः changed to बर्हिः ।. But neither reads प्राचीनम् ।. We with P̊ V Cp. ३ P̊ विश्वम्ऽइन्वाः ।. ४ So P P̊ J K V Cp. ५ S̊ मिमान. Dc Cs मिमानो changed to मिमाना. ६ All our authorities मनुष्यदिह.

तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वतीः स्वपसः सदन्ताम् ॥ ८ ॥

आ । नः । यज्ञम् । भारती । तूर्यम् । एतु । इडा । मनुष्वत् । इह । चेतयन्ती ।
तिस्रः । देवीः । बर्हिः । आ । इदम् । स्योनम् । सरस्वतीः । सुऽअपसः । सदन्ताम् ॥ ८ ॥

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥ ९ ॥

यः । इमे इति । द्यावापृथिवी इति । जनित्री इति । रूपैः । अपिंशत् । भुवनानि । विश्वा ।
तम् । अद्य । होतः । इषितः । यजीयान् । देवम् । त्वष्टारम् । इह । यक्षि । विद्वान् ॥ ९ ॥

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ १० ॥

उपऽअवसृज । त्मन्या । सम्ऽअञ्जन् । देवानाम् । पाथः । ऋतुऽथा[2] । हवींषि ।
वनस्पतिः । शमिता । देवः । अग्निः । स्वदन्तु । हव्यम् । मधुना । घृतेन ॥ १० ॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत् पुरोगाः ।
अस्य होतुः प्रशिष्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥ ११ ॥

सद्यः । जातः । वि । अमिमीत । यज्ञम् । अग्निः । देवानाम् । अभवत् । पुरःऽगाः ।
अस्य । होतुः । प्रऽशिषि[3] । ऋतस्य । वाचि । स्वाहाऽकृतम् । हविः । अदन्तु । देवाः ॥ ११ ॥

इति तृतीयेनुवाके द्वितीयं सूक्तम् ॥

"ददिर्हि" इति सूक्तं विषभैषज्यकर्मणि विनियुज्यते । तत्र "ददिर्हि" इति प्रथमर्चः सर्वविषभैषज्यकर्मणि विनियोगः । तद् उक्तं कौशिकेन । "ददिर्हीति तक्षकायेत्युक्तम्" इति [कौ° ४.५] ॥ ददिर्हि इत्येतस्या विनियोगस्तक्षकाय [कौ° ४.४] इति सूत्रे प्रोक्त इति तस्यार्थः । तद्विनियोगविस्तरस्तु "ब्राह्मणो जज्ञे" इति सूक्ते [४.६] द्रष्टव्यः ॥

द्वितीयादीनाम् ऋचां प्रत्यृचं विषापहरण एव विनियोगः । तथा च सूत्रम् । "द्वितीयया ग्रहणी । सव्यं परिक्रामति । शिखा- "सिचि स्तम्बान् उद्ग्रथ्नाति । तृतीयया प्रसर्जनी । चतुर्थ्या दक्षिणम् अपेहीति दंदम तृणैः प्रकर्ष्याहिम् अभि निरस्यति यतो "दष्टः । पञ्चम्या वलीकपललज्वालेन । षष्ठ्यार्त्नीज्यापाशेन । द्वाभ्यां मधूद्रापान् पाययति । नवम्या श्वावित्पुरीषम् । त्रिःशु- "क्रया मांसं प्राशयति । दशम्यालाबुनाचमयति । एकादश्या नाभिं बध्नाति" इति [कौ° ४.५] ॥ अस्यार्थः । ग्रहणी कट- कबन्धः । मृदादितोऽप्रदक्षिणं रेखां करोति बन्धः । तद् विषस्तम्भनभैषज्यम् । शिखां दष्टस्य बध्नाति तदपि विषस्तम्भनम् । श्वेतवस्त्रे शणस्तम्बे वा ग्रन्थिं बध्नाति । विषं स्तभ्यते शरीरे न सर्पति । तृतीयया दष्टं स्थानं पीडयति । तेन विषम् अन्यत्र गच्छति । चतुर्थ्या आचार्यस्ततः प्रदक्षिणं परिक्रामति । "अपेहि" [७.९३.] इत्यृचं जपित्वा तृणानि प्रज्वाल्य अहेरभिमुखं प्रक्षिपति दष्टस्थाने वा । वलीकेति गृहतृणावज्वालितम् उदकम् अभिमन्त्र्य दष्टं पाययति प्रोक्षति च । षष्ठ्या आर्त्नीज्यापाशम् अभिमन्त्र्य बध्नाति । सप्तम्यष्टमीभ्यां मधुमक्षिकां मधुवृक्षमृत्तिकां चाभिमन्त्र्य पाययति । पुरीषम् अभिमन्त्र्य पाययतीति शेषः ।

१ See note ६, preceding page. २ P ऋतुथा । ३ P K प्रऽदिषि ।

[illegible] ॥

[illegible] इति [ कौ° ६. २ ] ॥ [illegible] ॥

दुदिर्हि मह्यं वरुणो दिवः कविर्वचोभिरुग्रैर्नि रिणामि ते विषम् ।
खातमखातमुत सक्तमग्रभमिरेव धन्वन्नि जजास ते विषम् ॥ १ ॥

ददिः । हि । मह्यम् । वरुणः । दिवः । कविः । वचःऽभिः । उग्रैः । नि । रिणामि । ते । विषम् ।
खातम् । अखातम् । उत । सक्तम् । अग्रभम् । इराऽइव । धन्वन् । नि । जजास । ते । विषम् ॥ १ ॥

यत् ते अपोदकं विषं तत् त एतास्वग्रभम् ।
गृह्णामि ते मध्यममुत्तमं रसमुतावमं भियसा नेशदादु ते ॥ २ ॥

यत् । ते । अपःऽउदकम् । विषम् । तत् । ते । एतासु । अग्रभम् ।
गृह्णामि । ते । मध्यमम् । उत्ऽतमम् । रसम् । उत । अवमम् । भियसा । नेशत् । आत् ।
ऊं इति । ते ॥ २ ॥

वृषा मे रवो नभसा न तन्यतुरुग्रेण ते वचसा बाध आदु ते ।
अहं तमस्य नृभिरग्रभं रसं तमस इव ज्योतिरुदेतु सूर्यः ॥ ३ ॥

वृषा । मे । रवः । नभसा । न । तन्यतुः । उग्रेण । ते । वचसा । बाधे । आत् । ऊं इति । ते ।
अहम् । तम् । अस्य । नृऽभिः । अग्रभम् । रसम् । तमसःऽइव । ज्योतिः । उत् । एतु ।
सूर्यः ॥ ३ ॥

चक्षुषा ते चक्षुर्हन्मि विषेण हन्मि ते विषम् ।
अहे म्रियस्व मा जीवीः प्रत्यगभ्येतु त्वा विषम् ॥ ४ ॥

चक्षुषा । ते । चक्षुः । हन्मि । विषेण । हन्मि । ते । विषम् ।
अहे । म्रियस्व । मा । जीवीः । प्रत्यक् । अभि । एतु । त्वा । विषम् ॥ ४ ॥

---

१ P धन्वन् ।. २ A B B B D K K R S V D C अहेर्म्रि° (P P J K V C अहेः !), doubtless the traditional ancient reading, due to the ignorance of grammar on the part of the Vaidikas. Conf. the vernacular ग्रुष्ट for दुष्ट, उच्छ्राप for उच्छाप, श्राप for शाप, प्रण for पण (in Hindi).

कैरात पृश्न उपतृण्य बभ्र आ मे शृणुतासिता अलीकाः ।
मा मे सख्युः स्तामानमपि ष्ठाताश्रावयन्तो नि विषे[1] रमध्वम्[2] ॥ ५ ॥

कैरात । पृश्ने । उपऽतृण्य । बभ्रो इति[3] । आ । मे । शृणुत । असिताः । अलीकाः ।
मा । मे । सख्युः । स्तामानम् । अपि । स्थात । आऽश्रावयन्तः । नि । विषे । रमध्वम् ॥ ५ ॥

असितस्य तैमातस्य बभ्रोरपोदकस्य च ।
सात्रासाहस्याहं मन्योरव ज्यामिव धन्वनो वि मुञ्चामि रथाँ इव ॥ ६ ॥

असितस्य । तैमातस्य । बभ्रोः । अपऽउदकस्य । च ।
सात्राऽसहस्य । अहम् । मन्योः । अव । ज्याम्ऽइव । धन्वनः । वि । मुञ्चामि । रथान्ऽइव ॥ ६ ॥

आलिगी च विलिगी च पिता च माता च ।
विद्म वः सर्वतो बन्ध्वरसाः किं करिष्यथ ॥ ७ ॥

आऽलिगी । च । विऽलिगी । च । पिता । च । माता । च ।
विद्म । वः । सर्वतः । बन्धु । अरसाः । किम् । करिष्यथ ॥ ७ ॥

उरुगूलाया दुहिता जाता दास्यसिक्न्या[4] ।
प्रतङ्कं दद्रुषीणां सर्वासामरसं विषम् ॥ ८ ॥

उरुऽगूलायाः । दुहिता । जाता । दासी । असिक्न्या ।
प्रऽतङ्कम् । दद्रुषीणाम् । सर्वासाम् । अरसम् । विषम् ॥ ८ ॥

कर्णा श्वावित् तदब्रवीद् गिरेरवचरन्तिका ।
याः काश्चेमाः खनित्रिमास्तासामरसतमं विषम् ॥ ९ ॥

कर्णा । श्वावित् । तत् । अब्रवीत् । गिरेः । अवऽचरन्तिका ।
याः । काः । च । इमाः । खनित्रिमाः । तासाम् । अरसऽतमम् । विषम् ॥ ९ ॥

ताबुवं न ताबुवं न घेत् त्वमसि ताबुवम् ।
ताबुवेनारसं विषम् ॥ १० ॥

ताबुवम् । न । ताबुवम् । न । घ । इत् । त्वम् । असि । ताबुवम् ।

---

१ A D R Cs P मिषे. We with B^h K K^m S^m V Dc P^2 J. २ D Cs रमध्वम्. ३ Cp बभ्रो इति ।. ४ S^m °सिक्न्यां. B^h °सिक्न्याः.

तस्तुवेन । अरसम् । विषम् ॥ १० ॥

तस्तुवं न तस्तुवं न घेत् त्वमसि तस्तुवम् ।
तस्तुवेनारसं विषम् ॥ ११ ॥

तस्तुवम् । न । तस्तुवम् । न । घ । इत् । त्वम् । असि । तस्तुवम् ।
तस्तुवेन । अरसम् । विषम् ॥ ११ ॥

इति तृतीयेऽनुवाके तृतीयं सूक्तम् ॥

"सुपर्णस्त्वा" इति सूक्तस्य कृत्यापरिहरणगणे पाठात् तत्तत्र कृत्यापरिहरणगणप्रयुक्तेषु तत्तत्कर्मसु सूक्तस्य विनियोगः । सूत्रादिकं "दूष्या दूषिरसि" इति [२. ११] सूक्ते द्रष्टव्यम् ॥

सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन्नसा ।
दिप्सौषधे त्वं दिप्सन्तमव कृत्याकृतं जहि ॥ १ ॥

सुऽपर्णः । त्वा । अनु । अविन्दत् । सूकरः । त्वा । अखनत् । नसा ।
दिप्स । ओषधे । त्वम् । दिप्सन्तम् । अव । कृत्याऽकृतम् । जहि ॥ १ ॥

अव जहि यातुधानानव कृत्याकृतं जहि ।
अथो यो अस्मान् दिप्सति तमु त्वं जह्योषधे ॥ २ ॥

अव । जहि । यातुऽधानान् । अव । कृत्याऽकृतम् । जहि ।
अथो इति । यः । अस्मान् । दिप्सति । तम् । ऊं इति । त्वम् । जहि । ओषधे ॥ २ ॥

रिश्यस्येव परीशासं परिकृत्य परि त्वचः ।
कृत्यां कृत्याकृते देवा निष्कमिव प्रति मुञ्चत ॥ ३ ॥

रिश्यस्यऽइव । परिऽशासम् । परिऽकृत्य । परि । त्वचः ।
कृत्याम् । कृत्याऽकृते । देवाः । निष्कम्ऽइव । प्रति । मुञ्चत ॥ ३ ॥

पुनः कृत्यां कृत्याकृते हस्तगृह्य परा णय ।
समक्षमस्मा आ धेहि यथा कृत्याकृतं हनत् ॥ ४ ॥

पुनः । कृत्याम् । कृत्याऽकृते । हस्तऽगृह्य । परा । नय ।
समऽअक्षम् । अस्मै । आ । धेहि । यथा । कृत्याऽकृतम् । हनत् ॥ ४ ॥

---

१ Cs तत्व°. २ P घ ।. ३ P ओषधे ।. ४ A B D R S Cs P P Cp ऋश्यं°. We with B K K V Dc J. ५ P परिशासम् ।. We with P J K Cp. ६ K नय.

कृत्याः सन्तु कृत्याकृते शपथः शपथीयते ।
सुखो रथ इव वर्ततां कृत्या कृत्याकृतं पुनः ॥ ५ ॥

कृत्याः । सन्तु । कृत्याऽकृते । शपथः । शपथिऽयते ।
सुऽखः । रथःऽइव । वर्तताम् । कृत्या । कृत्याऽकृतम् । पुनः ॥ ५ ॥

यदि स्त्री यदि वा पुमान् कृत्यां चकार पाप्मने ।
तामु तस्मै नयामस्यश्वमिवाश्वाभिधान्या ॥ ६ ॥

यदि । स्त्री । यदि । वा । पुमान् । कृत्याम् । चकार । पाप्मने ।
ताम् । ऊं इति । तस्मै । नयामसि । अश्वम्ऽइव । अश्वऽअभिधान्या ॥ ६ ॥

यदि वासि देवकृता यदि वा पुरुषैः कृता ।
तां त्वा पुनर्णयामसीन्द्रेण सयुजा वयम् ॥ ७ ॥

यदि । वा । असि । देवऽकृता । यदि । वा । पुरुषैः । कृता ।
ताम् । त्वा । पुनः । नयामसि । इन्द्रेण । सऽयुजा । वयम् ॥ ७ ॥

अग्ने पृतनाषाट् पृतनाः सहस्व ।
पुनः कृत्यां कृत्याकृते प्रतिहरणेन हरामसि ॥ ८ ॥

अग्ने । पृतनाषाट् । पृतनाः । सहस्व ।
पुनः । कृत्याम् । कृत्याऽकृते । प्रतिऽहरणेन । हरामसि ॥ ८ ॥

कृतव्यधनि विध्य तं यश्चकार तमिज्जहि ।
न त्वामचक्रुषे वयं वधाय सं शिशीमहि ॥ ९ ॥

कृतऽव्यधनि । विध्य । तम् । यः । चकार । तम् । इत् । जहि ।
न । त्वाम् । अचक्रुषे । वयम् । वधाय । सम् । शिशीमहि ॥ ९ ॥

पुत्र इव पितरं गच्छ स्वज इवाभिष्ठितो दश ।
बन्धमिवावक्रामी गच्छ कृत्ये कृत्याकृतं पुनः ॥ १० ॥

पुत्रःऽइव । पितरम् । गच्छ । स्वजःऽइव । अभिऽस्थितः । दश ।
बन्धम्ऽइव । अवऽक्रामी । गच्छ । कृत्ये । कृत्याऽकृतम् । पुनः ॥ १० ॥

उदेणीव वारण्यभिस्कन्दं मृगीव । कृत्या कर्तारमृच्छतु ॥ ११ ॥

उत् । पर्णीऽइ॑व । वार्र्णा । अभि॒ऽक्रन्द॑म् । मृगीऽइ॑व ॥ कृत्या । कर्तार॑म् । ऋच्छतु ॥ ११ ॥

इष्वा॑ ऋ॒जीयः॑ पततु॒ द्यावा॑पृथिवी॒ तं प्रति॑ ।

सा तं मृ॒गमि॑व गृह्णातु कृ॒त्या कृ॑त्या॒कृतं॒ पुन॑: ॥ १२ ॥

इष्वा॑: । ऋ॒जीय॑: । प॒त॒तु॒ । द्यावा॑पृथिवी॒ इति॑ । तम् । प्रति॑ ।

सा । तम् । मृ॒गम्ऽइ॑व । गृ॒ह्णा॒तु॒ । कृ॒त्या । कृ॒त्या॒ऽकृत॑म् । पुन॑: ॥ १२ ॥

अ॒ग्निरि॑वैतु प्रति॒कूल॑मनु॒कूल॑मिवोद॒कम् ।

सु॒खो रथ॑ इव वर्ततां कृ॒त्या कृ॑त्या॒कृतं॒ पुन॑: ॥ १३ ॥

अ॒ग्निःऽइ॑व । ए॒तु॒ । प्र॒ति॒ऽकूल॑म् । अ॒नु॒कूल॑म्ऽइव । उ॒द॒कम् ।

सु॒ऽखः । रथ॑:ऽइव । व॒र्त॒ता॒म् । कृ॒त्या । कृ॒त्या॒ऽकृत॑म् । पुन॑: ॥ १३ ॥

इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ॥

गवां रोगोपशमनपुष्टिप्रजननकर्मसु "एका च मे" इति सूक्तेन अभिमन्त्रितं [illegible] गाः पाययेत् । तद् उक्तं कौशिकसूत्रे । "एका च म इति गा [illegible] पाययति" इत्यादि [कौ° ३.२] ॥

[illegible] "एका च मे" [५.१५] "यथेक[illegible]" [५.१६] इति सूक्ताभ्यां [illegible] मधुना [illegible] अभिमन्त्र्य पाययति ॥ "यथेक[illegible]" इत्यभिमन्त्र्य [illegible] ॥

तथा [illegible] "[illegible]" इत्यनेन [illegible] अभिमन्त्र्य [illegible] । तद् उक्तं कौशिकेन । "[illegible] मन्त्रोक्तानां [illegible] मधुमन्थं पाययति । [illegible] । [illegible]" इति [कौ° ४.५] ॥ "एका च" मे इति [illegible] । "यथेक[illegible]" इति [illegible] ॥

एका॑ च मे॒ दश॑ च मेऽपव॒क्तार॑ ओषधे ।

ऋत॑जात॒ ऋता॑वरि॒ मधु॑ मे मधु॒ला क॑रः ॥ १ ॥

एका॑ । च॒ । मे॒ । दश॑ । च॒ । मे॒ । अ॒प॒ऽव॒क्तार॑: । ओष॑धे ।

ऋत॑ऽजाते । ऋत॑ऽवरि । मधु॑ । मे॒ । म॒धु॒ला । क॒र॒: ॥ १ ॥

द्वे च॑ मे विंश॒तिश्च॑ ०।० ॥ २ ॥

द्वे इति॑ । च॒ । मे॒ । विं॒श॒तिः । च॒ ॥०॥ २ ॥

ति॒स्रश्च॑ मे त्रिं॒शच्च॑ ०।० ॥ ३ ॥

ति॒स्रः । च॒ । मे॒ । त्रिं॒शत् । च॒ ॥०॥ ३ ॥

चत॑स्रश्च मे चत्वारिं॒शच्च॑ ०।० ॥ ४ ॥

१ P °पृथिवी° ।

चतस्रः । च । मे । चत्वारिंशत् । च ॥०॥ ४ ॥

**पञ्च च मे पञ्चाशच्च ०।० ॥ ५ ॥**

पञ्च । च । मे । पञ्चाशत् । च ॥०॥ ५ ॥

**षट् च मे षष्टिश्च ०।० ॥ ६ ॥**

षट् । च । मे । षष्टिः । च ॥०॥ ६ ॥

**सप्त च मे सप्ततिश्च ०।० ॥ ७ ॥**

सप्त । च । मे । सप्ततिः । च ॥०॥ ७ ॥

**अष्ट च मेशीतिश्च ०।० ॥ ८ ॥**

अष्ट । च । मे । अशीतिः । च ॥०॥ ८ ॥

**नव च मे नवतिश्च ०।० ॥ ९ ॥**

नव । च । मे । नवतिः । च ॥०॥ ९ ॥

**दश च मे शतं च मेपवक्तारः ०।० ॥ १० ॥**

दश । च । मे । शतम् । च । मे । अपऽवक्तारः ॥०॥ १० ॥

**शतं च मे सहस्रं चापवक्तारं ओषधे ।**
**ऋतंजात ऋतावरि मधु मे मधुला करः ॥ ११ ॥**

शतम् । च । मे । सहस्रम् । च । अपऽवक्तारः । ओषधे ।
ऋतऽजाते । ऋतऽवरि । मधु । मे । मधुला । करः ॥ ११ ॥

तृतीयेनुवाके पञ्चमं सूक्तम् ॥

इति तृतीयोनुवाकः ॥

"यद्येकवृषोसि" इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः । सूत्रमपि पूर्वसूक्ते उदाहृतम् ॥

**यद्येकवृषोसि सृजारसोसि ॥ १ ॥**

यदि । एकऽवृषः । असि । सृज । अरसः । असि ॥१॥

**यदि द्विवृषोसि० ॥ २ ॥**

यदि । द्विऽवृषः । असि ॥०॥ २ ॥

**यदि त्रिवृषोसि० ॥ ३ ॥**

यदि । त्रिऽवृषः । असि ॥०॥ ३ ॥

**यदि चतुर्वृषोसि० ॥ ४ ॥**

यदि । चतुःऽवृषः । असि ॥०॥ ४ ॥

**यदि पञ्चवृषोसि० ॥ ५ ॥**

**यदि षड्वृषोसि० ॥ ६ ॥**

यदि । पञ्चऽवृषः । असि ॥०॥ ५ ॥

यदि । षट्ऽवृषः । असि ॥०॥ ६ ॥

**यदि सप्तवृषोसि० ॥ ७ ॥**

यदि । सप्तऽवृषः । असि ॥०॥ ७ ॥

**यद्यष्टवृषोसि० ॥ ८ ॥**

यदि । अष्टऽवृषः । असि ॥०॥ ८ ॥

**यदि नववृषोसि० ॥ ९ ॥**

यदि । नवऽवृषः । असि ॥०॥९॥

**यदि दशवृषोसि सृजारसोसि ॥१०॥**

यदि । दशऽवृषः । असि । सृज । अरसः । असि ॥१०॥

**यद्येकादशोसि सोपोदकोसि ॥ ११ ॥**

यदि । एकादशः । असि । सः । अपऽउदकः । असि ॥ ११ ॥

इति चतुर्थेनुवाके प्रथमं सूक्तम् ॥

गोहरणानन्तरकर्माणि "तेऽवदन्" इति सूक्तेन नेतॄणां पदं वृश्चति ॥
तथा अनेन सूक्तेन भीतान् अन्वाह ॥
तद् उक्तं कौशिकेन । "तेऽवदन्निति नेतॄणां पदं वृश्चति । अन्वाह" इति [कौ° ६.२] ॥

**तेऽवदन् प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा ।**
**वीडुहरास्तप उग्रं मयोभूरापो देवीः प्रथमजा ऋतस्य ॥ १ ॥**

ते । अवदन् । प्रथमाः । ब्रह्मऽकिल्बिषे । अकूपारः । सलिलः । मातरिश्वा ।
वीडुऽहराः । तपः । उग्रम् । मयःऽभूः । आपः । देवीः । प्रथमऽजाः । ऋतस्य ॥ १ ॥

**सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ।**
**अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥ २ ॥**

सोमः । राजा । प्रथमः । ब्रह्मऽजायाम् । पुनः । प्र । अयच्छत् । अहृणीयमानः ।
अनुऽअर्तिता । वरुणः । मित्रः । आसीत् । अग्निः । होता । हस्तऽगृह्य । आ । निनाय ॥ २ ॥

**हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेति चेदवोचत् ।**
**न दूताय प्रह्येया तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ ३ ॥**

हस्तेन । एव । ग्राह्यः । आऽधिः । अस्याः । ब्रह्मऽजाया । इति । च । इत् । अवोचत् ।
न । दूताय । प्रऽहेया । तस्थे । एषा । तथा । राष्ट्रम् । गुपितम् । क्षत्रियस्य ॥ ३ ॥

**यामाहुस्तारकैषा विकेशीति दुच्छुनां ग्राममवपद्यमानाम् ।**
**सा ब्रह्मजाया वि दुनोति राष्ट्रं यत्र प्रापादि शश उल्कुषीमान् ॥ ४ ॥**

R ग्राह्य आधि°. P Cr ग्राह्यः ।.

याम् । आहुः । तारका । एषा । विऽकेशी । इति । दुच्छुनाम् । ग्रामम् । अवऽपद्यमानाम् ।
सा । ब्रह्मऽजाया । वि । दुनोति । राष्ट्रम् । यत्र । प्रऽअपादि । शशः । उल्कुषीऽमान् ॥ ४ ॥

ब्रह्मचारी चरति वेविषद् विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद् बृहस्पतिः सोमेन नीतां जुह्वं१ न देवाः ॥ ५ ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः । सः । देवानाम् । भवति । एकम् । अङ्गम् ।
तेन । जायाम् । अनु । अविन्दत् । बृहस्पतिः । सोमेन । नीताम् । जुह्वम् । न । देवाः ॥ ५ ॥

देवा वा एतस्यामवदन्त पूर्वे सप्तऋषयस्तपसा ये निषेदुः ।
भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन् ॥ ६ ॥

देवाः । वै । एतस्याम् । अवदन्त । पूर्वे । सप्तऽऋषयः । तपसा । ये । निऽसेदुः ।
भीमा । जाया । ब्राह्मणस्य । उपऽनीता । दुःऽधाम् । दधाति । परमे । विऽओमन् ॥ ६ ॥

ये गर्भा अवपद्यन्ते जगद् यच्चापलुप्यते ।
वीरा ये तृह्यन्ते मिथो ब्रह्मजाया हिनस्ति तान् ॥ ७ ॥

ये । गर्भाः । अवऽपद्यन्ते । जगत् । यत् । च । अपऽलुप्यते ।
वीराः । ये । तृह्यन्ते । मिथः । ब्रह्मऽजाया । हिनस्ति । तान् ॥ ७ ॥

उत यत् पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः ।
ब्रह्मा चेद्धस्तमग्रहीत् स एव पतिरेकधा ॥ ८ ॥

उत । यत् । पतयः । दश । स्त्रियाः । पूर्वे । अब्राह्मणाः ।
ब्रह्मा । च । इत् । हस्तम् । अग्रहीत् । सः । एव । पतिः । एकऽधा ॥ ८ ॥

ब्राह्मण एव पतिर्न राजन्यो३ न वैश्यः ।
तत् सूर्यः प्रब्रुवन्नेति पञ्चभ्यो मानवेभ्यः ॥ ९ ॥

ब्राह्मणः । एव । पतिः । न । राजन्यः । न । वैश्यः ।
तत् । सूर्यः । प्रऽब्रुवन् । एति । पञ्चऽभ्यः । मानवेभ्यः ॥ ९ ॥

पुनर्वै देवा अददुः पुनर्मनुष्या अददुः ।

---

१ J एषाम् ।. २ D Cs ३ for १. We with A B^h K K^m R S^m V Dc. ३ So we with A B B^h Bp D K K^m R S^m V Dc Cs P P^2 J Cp. ४ A १ for ३.

राजानः सत्यं गृह्णाना ब्रह्मजायां पुनर्ददुः ॥ १० ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । अददुः ।
राजानः । सत्यम् । गृह्णानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ १० ॥

पुनर्दाय ब्रह्मजायां कृत्वा देवैर्निकिल्बिषम् ।
ऊर्जं पृथिव्या भक्त्वोरुगायमुपासते ॥ ११ ॥

पुनःऽदाय । ब्रह्मऽजायाम् । कृत्वा । देवैः । निःऽकिल्बिषम् ।
ऊर्जम् । पृथिव्याः । भक्त्वा । उरुऽगायम् । उप । आसते ॥ ११ ॥

नास्य जाया शतवाही कल्याणी तल्पमा शये ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥ १२ ॥

न । अस्य । जाया । शतऽवाही । कल्याणी । तल्पम् । आ । शये ।
यस्मिन् । राष्ट्रे । निऽरुध्यते । ब्रह्मऽजाया । अचित्त्या ॥ १२ ॥

न विकर्णः पृथुशिरास्तस्मिन् वेश्मनि जायते ।
यस्मिन्० ॥ १३ ॥

न । विऽकर्णः । पृथुऽशिराः । तस्मिन् । वेश्मनि । जायते ॥०॥ १३ ॥

नास्य क्षत्ता निष्कग्रीवः सूनानामेत्यग्रतः ।
यस्मिन्० ॥ १४ ॥

न । अस्य । क्षत्ता । निष्कऽग्रीवः । सूनानाम् । एति । अग्रतः ॥०॥ १४ ॥

नास्य श्वेतः कृष्णकर्णो धुरि युक्तो महीयते ।
यस्मिन्० ॥ १५ ॥

न । अस्य । श्वेतः । कृष्णऽकर्णः । धुरि । युक्तः । महीयते ॥०॥ १५ ॥

नास्य क्षेत्रे पुष्करिणी नाण्डीकं जायते बिसम् ।
यस्मिन्० ॥ १६ ॥

न । अस्य । क्षेत्रे । पुष्करिणी । न । आण्डीकम् । जायते । बिसम् ॥०॥ १६ ॥

नास्मै पृश्निं वि दुहन्ति ये[1]ऽस्या दोहमुपासते ।

---

1 A K R येस्या. We with B D K S V Dc C.

यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥ १७ ॥

न । अस्मै । पृश्निम् । वि । दुहन्ति । ये । अस्याः । दोहम् । उपऽआसते ।
यस्मिन् । राष्ट्रे । निऽरुध्यते । ब्रह्मऽजाया । अचित्त्या ॥ १७ ॥

नास्य धेनुः कल्याणी नानड्वान्त्सहते धुरम् ।
विजानिर्यत्र ब्राह्मणो[1] रात्रिं वसति पापया ॥ १८ ॥

न । अस्य । धेनुः । कल्याणी । न । अनड्वान् । सहते । धुरम् ।
विऽजानिः । यत्र । ब्राह्मणः । रात्रिम् । वसति । पापया ॥ १८ ॥

इति चतुर्थेनुवाके द्वितीयं सूक्तम् ॥

गोहरणमारणविशसनाधिश्रयणपचनभक्षणादिषु क्रियमाणेषु अभिचारकामो ब्रह्मचारी "नैतां ते देवाः" "अतिमात्रम् अवर्धन्त" इति सूक्तद्वयं "श्रमेण तपसा" इत्यनुवाकं च [१२.५] शत्रून् अन्वाह । द्वेष्यं मनसि कृत्वा जपतीत्यर्थः । तद् उक्तं कौशिकसूत्रे । "ब्रह्मगवीभ्याम् अन्वाह । चेष्टाम् । विचृतति । ऊबध्ये । श्मशाने । त्रिरमून् हनस्वेत्याह । द्वितीययाश्मानम् ऊबध्ये गूहयति । द्वादशरात्रं सर्वव्रत उपश्राम्यति । द्विरुदिते स्तृतः । अवागग्रेण निवर्तयति" इति [कौ० ६. २] ॥ "नैतां ते देवाः" "अतिमात्रम् अवर्धन्त" इति द्वे सूक्ते एका ब्रह्मगवी । "श्रमेण तपसा" इत्यनुवाकोऽन्या ॥ चेष्टाम् । अन्वाहेति शेषः । चेष्टा हरणमारणविशसनाद्याः ॥ विचृतति ऊबध्ये हविःकृतेत्यर्थः ॥ अमून् शत्रून् ॥ द्विरुदिते द्वादशरात्राद् ऊर्ध्वं द्विः सवितर्युद्गते नष्टः शत्रुरिति ज्ञेयम् ॥ अवागग्रेण दण्डेन अश्मानम् ऊबध्यग्रहाद् अपनयति ॥

नैतां ते देवा अददुस्तुभ्यं नृपते अत्तवे ।
मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम् ॥ १ ॥

न । एताम् । ते । देवाः । अददुः । तुभ्यम् । नृऽपते । अत्तवे ।
मा । ब्राह्मणस्य । राजन्य । गाम् । जिघत्सः[2] । अनाद्याम् ॥ १ ॥

अक्षद्रुग्धो राजन्यः पाप आत्मपराजितः ।
स ब्राह्मणस्य गामद्यादद्य जीवानि मा श्वः ॥ २ ॥

अक्षऽद्रुग्धः । राजन्यः । पापः । आत्मऽपराजितः ।
सः । ब्राह्मणस्य । गाम् । अद्यात् । अद्य । जीवानि । मा । श्वः ॥ २ ॥

आविष्टिताघविषा[3] पृदाकूरिव चर्मणा ।
सा[4] ब्राह्मणस्य राजन्य तृष्टैषा गौरनाद्या ॥ ३ ॥

आऽविष्टिता[3] । अघऽविषा । पृदाकूःऽइव । चर्मणा ।

---

१ R $S^m$ ब्रह्मणो. २ P जिघत्सः ।. ३ A B $B^h$ K $K^m$ R $S^m$ Dc Cs आविष्टि°. P $P^2$ J K Cp आऽविस्थिता ।. We with D. ४ So we with all our authorities.

सा । ब्राह्मणस्य । राजन्य । तृष्टा । एषा । गौः । अनाद्या ॥ ३ ॥

निर्वै क्षत्रं नयति हन्ति वर्चोऽग्निरिवारब्धो वि दुनोति सर्वम् ।
यो ब्राह्मणं मन्यते अन्नमेव स विषस्य पिबति तैमातस्य ॥ ४ ॥

निः । वै । क्षत्रम् । नयति । हन्ति । वर्चः । अग्निःऽइव । आऽरब्धः । वि । दुनोति । सर्वम् ।
यः । ब्राह्मणम् । मन्यते । अन्नम् । एव । सः । विषस्य । पिबति । तैमातस्य ॥ ४ ॥

य एनं हन्ति मृदुं मन्यमानो देवपीयुर्धनकामो न चित्तात् ।
सं तस्येन्द्रो हृदयेऽग्निमिन्ध उभे एनं द्विष्टो नभसी चरन्तम् ॥ ५ ॥

यः । एनम् । हन्ति । मृदुम् । मन्यमानः । देवऽपीयुः । धनऽकामः । न । चित्तात् ।
सम् । तस्य । इन्द्रः । हृदये । अग्निम् । इन्धे । उभे इति । एनम् । द्विष्टः । नभसी इति ।
चरन्तम् ॥ ५ ॥

न ब्राह्मणो हिंसितव्यो३ऽग्निः प्रियतनोरिव ।
सोमो ह्यस्य दायाद इन्द्रो अस्याभिशस्तिपाः ॥ ६ ॥

न । ब्राह्मणः । हिंसितव्य३ः । अग्निः । प्रियतनोःऽइव ।
सोमः । हि । अस्य । दायादः । इन्द्रः । अस्य । अभिशस्तिऽपाः ॥ ६ ॥

शतापाष्ठां नि गिरति तां न शक्नोति निःखिदन् ।
अन्नं यो ब्रह्मणां मल्वः स्वाद्व१द्मीति मन्यते ॥ ७ ॥

शतऽअपाष्ठाम् । नि । गिरति । ताम् । न । शक्नोति । निःऽखिदन् ।
अन्नम् । यः । ब्रह्मणाम् । मल्वः । स्वादु । अद्मि । इति । मन्यते ॥ ७ ॥

जिह्वा ज्या भवति कुल्मलं वाङ्नाडीका दन्तास्तपसाभिदिग्धाः ।
तेभिर्ब्रह्मा विध्यति देवपीयून् हृद्बलैर्धनुर्भिर्देवजूतैः ॥ ८ ॥

जिह्वा । ज्या । भवति । कुल्मलम् । वाक् । नाडीकाः । दन्ताः । तपसा । अभिऽदिग्धाः ।

---

१ See note ४, preceding page. २ P P̈ J अनाद्याम् ।. We with K V Cp. ३ K °रब्धा. ४ A B Bᴾ D K R S̈ Dc Cs उभ ए°. We with B̈ K̈ V. ५ P P̈ J Cp वे ।. We with V. ६ So we with all our authorities. ७ A D Cs मल्वः. Dc S̈ R P J Cp मल्व३ः. We with B̈ K K̈ V Dc P̈. ८ B B̈ D R S̈ Cs २ for १. We with A K K̈ V Dc. ९ Cs °र्धनुर्भिर्देव°.

तेभिः। ब्रह्मा। विध्यति। देवऽपीयून्। हृत्ऽबलैः। धनुःऽभिः। देवऽजूतैः॥ ८॥

तीक्ष्णेषवो ब्राह्मणा हेतिमन्तो यामस्यन्ति शरव्यां३ न सा मृषा।[1]
अनुहाय तपसा मन्युना चोत दूरादव भिन्दन्त्येनम्॥ ९॥

तीक्ष्णऽइषवः। ब्राह्मणाः। हेतिऽमन्तः। याम्। अस्यन्ति। शरव्याम्।[2] न। सा। मृषा।
अनुऽहाय। तपसा। मन्युना। च। उत। दूरात्। अव। भिन्दन्ति। एनम्॥ ९॥

ये सहस्रमराजन्नासन् दशशता उत।
ते ब्राह्मणस्य गां जग्ध्वा वैतहव्याः पराभवन्॥ १०॥

ये। सहस्रम्। अराजन्। आसन्। दशऽशताः। उत।
ते। ब्राह्मणस्य। गाम्। जग्ध्वा। वैतऽहव्याः। परा। अभवन्॥ १०॥

गौरेव तान्[3] हन्यमाना वैतहव्याँ अवातिरत्।
ये केसरप्राबन्धायाश्चरमाजामपेचिरन्॥ ११॥

गौः। एव। तान्। हन्यमाना। वैतऽहव्यान्। अव। अतिरत्।
ये। केसरऽप्राबन्धायाः। चरमऽअजाम्। अपेचिरन्॥ ११॥

एकशतं ता जनता या भूमिर्व्यधूनुत।[4]
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन्॥ १२॥

एकऽशतम्। ताः। जनताः। याः। भूमिः। विऽअधूनुत।[4]
प्रऽजाम्। हिंसित्वा। ब्राह्मणीम्। असम्ऽभव्यम्। परा। अभवन्॥ १२॥

देवपीयुश्चरति मर्त्येषु गरगीर्णो भवत्यस्थिभूयान्।
यो ब्राह्मणं देवबन्धुं हिनस्ति न स पितृयाणमप्येति लोकम्॥ १३॥

देवऽपीयुः। चरति। मर्त्येषु। गरऽगीर्णः। भवति। अस्थिऽभूयान्।
यः। ब्राह्मणम्। देवऽबन्धुम्। हिनस्ति। न। सः। पितृऽयानम्। अपि। एति। लोकम्॥ १३॥

अग्निर्वै नः पदवायः सोमो दायाद उच्यते।

---

१ A १ for ३. २ P P̊ J शरव्याम्।. K V शरव्यम्।. Cp शरव्याम्। changed to शरव्यम्।.
३ K तां. ४ Such is the accent of all our authorities.

हन्ताभिशस्तेन्द्रस्तथा तद् वेधसो विदुः ॥ १४ ॥

अग्निः । वै । नः । पदऽवायः । सोमः । दायादः । उच्यते ।
हन्ता । अभिऽशस्ता । इन्द्रः । तथा । तत् । वेधसः । विदुः ॥ १४ ॥

इषुरिव दिग्धा नृपते पृदाकूरिव गोपते ।
सा ब्राह्मणस्येषुर्घोरा तया विध्यति पीयतः ॥ १५ ॥

इषुःऽइव । दिग्धा । नृऽपते । पृदाकूःऽइव । गोऽपते ।
सा । ब्राह्मणस्य । इषुः । घोरा । तया । विध्यति । पीयतः ॥ १५ ॥

इति चतुर्थेऽनुवाके तृतीयं सूक्तम् ॥

" अतिमात्रम् अवर्धन्त " इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ॥

अतिमात्रमवर्धन्त नोदिव दिवमस्पृशन् ।
भृगुं हिंसित्वा सृञ्जया वैतहव्याः पराभवन् ॥ १ ॥

अतिऽमात्रम् । अवर्धन्त । न । उत्ऽइव । दिवम् । अस्पृशन् ।
भृगुम् । हिंसित्वा । सृञ्जयाः । वैतऽहव्याः । परा । अभवन् ॥ १ ॥

ये बृहत्सामानमाङ्गिरसमार्पयन् ब्राह्मणं जनाः ।
पेत्वस्तेषामुभयादमविस्तोकान्यावयत ॥ २ ॥

ये । बृहत्ऽसामानम् । आङ्गिरसम् । आर्पयन् । ब्राह्मणम् । जनाः ।
पेत्वः । तेषाम् । उभयादम् । अविः । तोकानि । आवयत् ॥ २ ॥

ये ब्राह्मणं प्रत्यष्ठीवन् ये वास्मिञ्छुल्कमीषिरे ।
अस्नस्ते मध्ये कुल्यायाः केशान् खादन्त आसते ॥ ३ ॥

ये । ब्राह्मणम् । प्रतिऽअष्ठीवन् । ये । वा । अस्मिन् । शुल्कम् । ईषिरे ।
अस्नः । ते । मध्ये । कुल्यायाः । केशान् । खादन्तः । आसते ॥ ३ ॥

ब्रह्मगवी पच्यमाना यावत् साभि विजङ्गहे ।

१ A D R S̈ Cs P J Cr हंता°. We with B K K̈ V Dc P̈. २ K °वर्धयन्त. ३ Cs सृजंया. ४ So we with B B̈ Bp D K K̈ V Dc Cs P P̈ J Cr. A R S̈ °शूक्र° for शुल्क°. ५ B अस्नास्ते. P ते ।.

तेजो राष्ट्रस्य निर्हन्ति न वीरो जायते वृषा ॥ ४ ॥

ब्रह्मऽगवी । पच्यमाना । यावत् । सा । अभि । विऽजङ्गहे ।
तेजः । राष्ट्रस्य । निः । हन्ति । न । वीरः । जायते । वृषा ॥ ४ ॥

क्रूरमस्या आशसनं तृष्टं पिशितमस्यते ।
क्षीरं यदस्याः पीयते तद् वै पितृषु किल्बिषम् ॥ ५ ॥

क्रूरम् । अस्याः । आऽशसनम् । तृष्टम् । पिशितम् । अस्यते ।
क्षीरम् । यत् । अस्याः । पीयते । तत् । वै । पितृषु । किल्बिषम् ॥ ५ ॥

उग्रो राजा मन्यमानो ब्राह्मणं यो जिघत्सति ।
परा तत् सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते ॥ ६ ॥

उग्रः । राजा । मन्यमानः । ब्राह्मणम् । यः । जिघत्सति ।
परा । तत् । सिच्यते । राष्ट्रम् । ब्राह्मणः । यत्र । जीयते ॥ ६ ॥

अष्टापदी चतुरक्षी चतुःश्रोत्रा चतुर्हनुः ।
द्व्यास्या द्विजिह्वा भूत्वा सा राष्ट्रमव धूनुते ब्रह्मज्यस्य ॥ ७ ॥

अष्टाऽपदी । चतुःऽअक्षी । चतुःऽश्रोत्रा । चतुःऽहनुः ।
द्विऽआस्या । द्विऽजिह्वा । भूत्वा । सा । राष्ट्रम् । अव । धूनुते । ब्रह्मऽज्यस्य ॥ ७ ॥

तद् वै राष्ट्रमा स्रवति नावं भिन्नामिवोदकम् ।
ब्रह्माणं यत्र हिंसन्ति तद् राष्ट्रं हन्ति दुच्छुना ॥ ८ ॥

तत् । वै । राष्ट्रम् । आ । स्रवति । नावम् । भिन्नाम्ऽइव । उदकम् ।
ब्रह्माणम् । यत्र । हिंसन्ति । तत् । राष्ट्रम् । हन्ति । दुच्छुना ॥ ८ ॥

तं वृक्षा अप सेधन्ति छायां नो मोपगा इति ।
यो ब्राह्मणस्य सद्धनमभि नारद मन्यते ॥ ९ ॥

तम् । वृक्षाः । अप । सेधन्ति । छायाम् । नः । मा । उप । गाः । इति ।
यः । ब्राह्मणस्य । सत् । धनम् । अभि । नारद । मन्यते ॥ ९ ॥

विषमेतद् देवकृतं राजा वरुणोब्रवीत् ।

न ब्राह्मणस्य गां जग्ध्वा राष्ट्रे जागार कश्चन ॥ १० ॥

विषम् । एतत् । देवऽकृतम् । राजा । वरुणः । अब्रवीत् ।

न । ब्राह्मणस्य । गाम् । जग्ध्वा । राष्ट्रे । जागार । कः । चन ॥ १० ॥

नवैव ता नवतयो या भूमिर्व्यधूनुत ।

प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ॥ ११ ॥

नव । एव । ताः । नवतयः । याः । भूमिः । विऽअधूनुत ।

प्रऽजाम् । हिंसित्वा । ब्राह्मणीम् । असम्ऽभव्यम् । परा । अभवन् ॥ ११ ॥

यां मृतायानुबध्नन्ति कूद्यं पदयोपनीम् ।

तद् वै ब्रह्मज्य ते देवा उपस्तरणमब्रुवन् ॥ १२ ॥

याम् । मृताय । अनुऽबध्नन्ति । कूद्यम् । पदऽयोपनीम् ।

तत् । वै । ब्रह्मऽज्य । ते । देवाः । उपऽस्तरणम् । अब्रुवन् ॥ १२ ॥

अश्रूणि कृपमाणस्य यानि जीतस्य वावृतुः ।

तं वै ब्रह्मज्य ते देवा अपां भागमधारयन् ॥ १३ ॥

अश्रूणि । कृपमाणस्य । यानि । जीतस्य । ववृतुः ।

तम् । वै । ब्रह्मऽज्य । ते । देवाः । अपाम् । भागम् । अधारयन् ॥ १३ ॥

येन मृतं स्नपयन्ति श्मश्रूणि येनोन्दते ।

तं वै ब्रह्मज्य ते देवा अपां भागमधारयन् ॥ १४ ॥

येन । मृतम् । स्नपयन्ति । श्मश्रूणि । येन । उन्दते ।

तम् । वै । ब्रह्मऽज्य । ते । देवाः । अपाम् । भागम् । अधारयन् ॥ १४ ॥

न वर्षं मैत्रावरुणं ब्रह्मज्यमभि वर्षति ।

नास्मै समितिः कल्पते न मित्रं नयते वशम् ॥ १५ ॥

न । वर्षम् । मैत्राऽवरुणम् । ब्रह्मऽज्यम् । अभि । वर्षति ।

न । अस्मै । सम्ऽइतिः । कल्पते । न । मित्रम् । नयते । वशम् ॥ १५ ॥

इति चतुर्थेऽनुवाके चतुर्थं सूक्तम् ॥

---

१ Such is the accent of all our authorities. २ P अश्रुणि । ३ P विशम् ।

"उच्चैर्घोषः" इति सूक्तेन त्रासनपरसेनाविद्वेषणकर्मणि भेर्यादिवादित्राणि प्रक्षाल्य तगरोशीरेण लेपयित्वा संपात्य त्रिस्ताडयित्वा वादकाय पुरोधाः प्रयच्छेत्। सूत्रितं हि। "उच्चैर्घोषः [५.२०] उप श्वासय [६.१२६] इति सर्ववादित्राणि प्रक्षाल्य तगरोशीरेण संधाव्य संपातवन्ति त्रिराहत्य प्रयच्छति" इति [कौ° २.७]॥

तथा महाव्रते अनेन सूक्तेन भूमिदुन्दुभिं ताडयेत्। तद् उक्तं वैताने। "भूमिदुन्दुभिम् औक्षेणापिनद्धं पुच्छेनाघ्नन्त्युच्चैर्घोष उप श्वासय" इति [वै° ६.४]॥

उच्चैर्घोषो दुन्दुभिः सत्वनायन् वानस्पत्यः संभृत उस्रियाभिः।
वाचं क्षुणुवानो दमयन्त्सपत्नान्त्सिंह इव जेष्यन्नभि तंस्तनीहि॥ १॥

उच्चैःऽघोषः। दुन्दुभिः। सत्वनाऽयन्। वानस्पत्यः। सम्ऽभृतः। उस्रियाभिः।
वाचम्। क्षुणुवानः। दमयन्। सऽपत्नान्। सिंहःऽइव। जेष्यन्। अभि। तंस्तनीहि॥१॥

सिंह इवास्तानीद् द्रुवयो विबद्धोभिक्रन्दन्नृषभो वासितामिव।
वृषा त्वं वध्रयस्ते सपत्ना ऐन्द्रस्ते शुष्मो अभिमातिषाहः॥ २॥

सिंहःऽइव। अस्तानीत्। द्रुवयः। विऽबद्धः। अभिऽक्रन्दन्। ऋषभः। वासिताम्ऽइव।
वृषा। त्वम्। वध्रयः। ते। सऽपत्नाः। ऐन्द्रः। ते। शुष्मः। अभिमातिऽसहः॥ २॥

वृषेव यूथे सहसा विदानो गव्यन्नभि रुव संधनाजित्।
शुचा विध्य हृदयं परेषां हित्वा ग्रामान् प्रच्युता यन्तु शत्रवः॥ ३॥

वृषाऽइव। यूथे। सहसा। विदानः। गव्यन्। अभि। रुव। संधनऽजित्।
शुचा। विध्य। हृदयम्। परेषाम्। हित्वा। ग्रामान्। प्रऽच्युताः। यन्तु। शत्रवः॥ ३॥

संजयन् पृतना ऊर्ध्वमायुर्गृह्या गृह्णानो बहुधा वि चक्ष्व।
दैवीं वाचं दुन्दुभ आ गुरस्व वेधाः शत्रूणामुप भरस्व वेदः॥ ४॥

सम्ऽजयन्। पृतनाः। ऊर्ध्वऽमायुः। गृह्याः। गृह्णानः। बहुऽधा। वि। चक्ष्व।
दैवीम्। वाचम्। दुन्दुभे। आ। गुरस्व। वेधाः। शत्रूणाम्। उप। भरस्व। वेदः॥ ४॥

दुन्दुभेर्वाचं प्रयतां वदन्तीमाशृण्वती नाथिता घोषबुद्धा।
नारी पुत्रं धावतु हस्तगृह्यामित्री भीता समरे वधानाम्॥ ५॥

दुन्दुभेः। वाचम्। प्रऽयताम्। वदन्तीम्। आऽशृण्वती। नाथिता। घोषऽबुद्धा।

---

१ A D K K̄ R S̄ Dc P P̄ ज्येष्य°. We with B̄ V Cs J Cp. २ B B̄ Bp D K K̄ S̄ V Dc Cs ध्रुवयो. We with A R P P̄ J Cp. ३ So we with all our authorities.

नारी । पुत्रम् । धावतु । हस्तऽगृह्य । अमित्री । भीता । समऽअरे । वधानाम् ॥ ५ ॥

पूर्वो दुन्दुभे प्र वदासि वाचं भूम्याः पृष्ठे वद रोचमानः ।
अमित्रसेनामभिजञ्जभानो द्युमद् वद दुन्दुभे सूनृतावत् ॥ ६ ॥

पूर्वः । दुन्दुभे । प्र । वदासि । वाचम् । भूम्याः । पृष्ठे । वद । रोचमानः ।
अमित्रऽसेनाम् । अभिऽजञ्जभानः । द्युऽमत् । वद । दुन्दुभे । सूनृताऽवत् ॥ ६ ॥

अन्तरेमे नभसी घोषो अस्तु पृथक् ते ध्वनयो यन्तु शीभम् ।
अभि क्रन्द स्तनयोत्पिपानः श्लोककृन्मित्रतूर्याय स्वर्धी ॥ ७ ॥

अन्तरा । इमे इति । नभसी इति । घोषः । अस्तु । पृथक् । ते । ध्वनयः । यन्तु । शीभम् ।
अभि । क्रन्द । स्तनय । उत्ऽपिपानः । श्लोकऽकृत् । मित्रऽतूर्याय । स्वऽअर्धी ॥ ७ ॥

धीभिः कृतः प्र वदाति वाचमुद्धर्षय सत्वनामायुधानि ।
इन्द्रमेदी सत्वनो नि ह्वयस्व मित्रैरमित्राँ अव जङ्घनीहि ॥ ८ ॥

धीभिः । कृतः । प्र । वदाति । वाचम् । उत् । हर्षय । सत्वनाम् । आयुधानि ।
इन्द्रऽमेदी । सत्वनः । नि । ह्वयस्व । मित्रैः । अमित्रान् । अव । जङ्घनीहि ॥ ८ ॥

संक्रन्दनः प्रवदो धृष्णुषेणः प्रवेदकृद् बहुधा ग्रामघोषी ।
श्रेयो वन्वानो वयुनानि विद्वान् कीर्तिं बहुभ्यो वि हर द्विराजे ॥ ९ ॥

समऽक्रन्दनः । प्रऽवदः । धृष्णुऽसेनः । प्रवेदऽकृत् । बहुऽधा । ग्रामऽघोषी ।
श्रेयः । वन्वानः । वयुनानि । विद्वान् । कीर्तिम् । बहुऽभ्यः । वि । हर । द्विऽराजे ॥ ९ ॥

श्रेयःकेतो वसुजित् सहीयान्त्संग्रामजित् संशितो ब्रह्मणासि ।
अंशूनिव ग्रावाधिषवणे अद्रिर्गव्यन् दुन्दुभेधि नृत्य वेदः ॥ १० ॥

श्रेयःऽकेतः । वसुऽजित् । सहीयान् । संग्रामऽजित् । समऽशितः । ब्रह्मणा । असि ।
अंशून्ऽइव । ग्रावा । अधिऽसवने । अद्रिः । गव्यन् । दुन्दुभे । अधि । नृत्य । वेदः ॥ १० ॥

शत्रूषाण्नीषाडभिमातिषाहो गवेषणः सहमान उद्भित् ।

---

१ K अमित्री ।. २ P समऽआरे ।. ३ So we with A D R S̈ De Cs P J Cp. P °जञ्ज-नानः ।. B̈ K K̈ V °मानो. ४ B̈ K̈ V घोषं. We with A D R S̈ De Cs. ५ P °पियानः ।. ६ A °रमित्रैं. ७ De अद्रि° corrected from अद्रिं°. R अद्रिं°. Cs अद्द°. ८ P समऽशीतः ।. We with P̈ J V Cp.

वाग्वीव मन्त्रं प्र भरस्व वाचं सांग्रामजित्यायेषमुद् वदेह ॥ ११ ॥

शत्रूषाट् । नीषाट् । अभिमातिऽसहः । गोऽएषणः । सहमानः । उत्ऽभित् ।
वाग्वीऽइव । मन्त्रम् । प्र । भरस्व । वाचम् । सांग्रामऽजित्याय । इषम् । उत् । वद् ।
इह ॥ ११ ॥

अच्युतच्युत् समदो गमिष्ठो मृधो जेता पुरएतायोध्यः ।
इन्द्रेण गुप्तो विदथा निचिक्यद्धृद्द्योतनो द्विषतां याहि शीभम् ॥ १२ ॥

अच्युतऽच्युत् । सऽमदः । गमिष्ठः । मृधः । जेता । पुरःऽएता । अयोध्यः ।
इन्द्रेण । गुप्तः । विदथा । निऽचिक्यत् । हृत्ऽद्योतनः । द्विषताम् । याहि । शीभम् ॥ १२ ॥

इति चतुर्थेनुवाके पञ्चमं सूक्तम् ॥

"विहृदयम्" इति सूक्तेन परसेनात्रासनविद्वेषणकर्मणि सर्ववादित्राणि प्रक्षाल्य तगरोशीरेण लेपयित्वा संपातवन्ति त्रिराहत्य वादकाय प्रयच्छति ॥

तथा अनेन सूक्तेन सोमाङ्कुरमणिं हरिणचर्मणा वेष्टितं कृत्वा संपात्य अभिमन्त्र्य बध्नाति ॥

तद् उक्तं कौशिकसूत्रे । "विहृदयम् इत्युच्चैस्तरां हुत्वा स्रुवम् उद्वर्तयन् सोमांशू हरिणचर्मण्युत्सीव्य क्षत्रियाय बध्नाति" इति [कौ° २.७] ॥ "विहृदयम्" इति सूक्तस्य सर्वत्र उच्चैःस्वरेण प्रयोगः ॥ उद्वर्तयन् ऊर्ध्वं परिवर्तयन् ॥

विहृदयं वैमनस्यं वदामित्रेषु दुन्दुभे ।
विद्वेषं कश्मशं भयममित्रेषु नि दध्मस्यवैनान् दुन्दुभे जहि ॥ १ ॥

विऽहृदयम् । वैमनस्यम् । वद । अमित्रेषु । दुन्दुभे ।
विऽद्वेषम् । कश्मशम् । भयम् । अमित्रेषु । नि । दध्मसि । अव । एनान् । दुन्दुभे । जहि ॥ १ ॥

उद्वेपमाना मनसा चक्षुषा हृदयेन च ।
धावन्तु बिभ्यतोमित्राः प्रत्रासेनाज्ये हुते ॥ २ ॥

उत्ऽवेपमानाः[3] । मनसा । चक्षुषा । हृदयेन । च ।
धावन्तु । बिभ्यतः । अमित्राः । प्रऽत्रासेन । आज्ये । हुते ॥ २ ॥

वानस्पत्यः संभृत उस्रियाभिर्विश्वगोत्र्यः ।
प्रत्रासममित्रेभ्यो वदाज्येनाभिघारितः ॥ ३ ॥

---

१ P संग्रामऽजित्याय ।. २ P हृऽद्योतनः ।. K P² J Cp. हृऽद्यो°. ३ P P² J Cp °माना ।. We with V.

वानस्पत्यः । सम्ऽभृतः । उस्रियाभिः । विश्वऽगोत्र्यः ।
प्रऽत्रासम् । अमित्रेभ्यः । वद । आज्येन । अभिऽघारितः ॥ ३ ॥

**यथा मृगाः संविजन्त आरण्याः पुरुषादधि ।**
**एवा त्वं दुन्दुभेमित्रानभि क्रन्द प्र त्रासयाथो चित्तानि मोहय ॥ ४ ॥**

यथा । मृगाः । सम्ऽविजन्ते । आरण्याः । पुरुषात् । अधि ।
एव । त्वम् । दुन्दुभे । अमित्रान् । अभि । क्रन्द । प्र । त्रासय । अथो इति । चित्तानि ।
मोहय ॥ ४ ॥

**यथा वृकादजावयो धावन्ति बहु बिभ्यतीः । एवा० ॥ ५ ॥**

यथा । वृकात् । अजऽअवयः । धावन्ति । बहु । बिभ्यतीः ॥०॥ ५ ॥

**यथा श्येनात् पतत्रिणः संविजन्ते अहर्दिवि सिंहस्य स्तनथोर्यथा ।**
**एवा त्वं दुन्दुभेमित्रानभि क्रन्द प्र त्रासयाथो चित्तानि मोहय ॥ ६ ॥**

यथा । श्येनात् । पतत्रिणः । सम्ऽविजन्ते । अहःऽदिवि । सिंहस्य । स्तनथोः । यथा ।
एव । त्वम् । दुन्दुभे । अमित्रान् । अभि । क्रन्द । प्र । त्रासय । अथो इति । चित्तानि ।
मोहय ॥ ६ ॥

**परामित्रान् दुन्दुभिना हरिणस्याजिनेन च ।**
**सर्वे देवा अतित्रसन् ये संग्रामस्येशते ॥ ७ ॥**

परा । अमित्रान् । दुन्दुभिना । हरिणस्य । अजिनेन । च ।
सर्वे । देवाः । अतित्रसन् । ये । सम्ऽग्रामस्य । ईशते ॥ ७ ॥

**यैरिन्द्रः प्रक्रीडते पद्घोषैश्छायया सह ।**
**तैरमित्रास्त्रसन्तु नोमी ये यन्त्यनीकशः ॥ ८ ॥**

यैः । इन्द्रः । प्रऽक्रीडते । पत्ऽघोषैः । छायया । सह ।
तैः । अमित्राः । त्रसन्तु । नः । अमी इति । ये । यन्ति । अनीकऽशः ॥ ८ ॥

**ज्याघोषा दुन्दुभयोभि क्रोशन्तु या दिशः ।**
**सेनाः पराजिता यतीरमित्राणामनीकशः ॥ ९ ॥**

ज्याऽघोषाः । दुन्दुभयः । अभि । क्रोशन्तु । याः । दिशः ।

सेनाः । पराऽजिताः । यतीः । अमित्राणाम् । अनीकऽशः ॥ ९ ॥

आदित्य चक्षुरा दत्स्व मरीचयोनु धावत ।
पत्सङ्गिनीरा सजन्तु विगते बाहुवीर्ये[1] ॥ १० ॥

आदित्य । चक्षुः । आ । दत्स्व । मरीचयः । अनु । धावत ।
पत्ऽसङ्गिनीः । आ । सजन्तु । विऽगते । बाहुऽवीर्ये[1] ॥ १० ॥

यूयमुग्रा मरुतः पृश्निमातर इन्द्रेण युजा प्र मृणीत शत्रून् ।
सोमो राजा वरुणो राजा महादेव उत मृत्युरिन्द्रः ॥ ११ ॥

यूयम् । उग्राः । मरुतः । पृश्निऽमातरः । इन्द्रेण । युजा । प्र । मृणीत । शत्रून् ।
सोमः । राजा । वरुणः । राजा । महाऽदेवः । उत । मृत्युः । इन्द्रः ॥ ११ ॥

एता देवसेनाः सूर्यकेतवः सचेतसः ।
अमित्रान् नो जयन्तु स्वाहा ॥ १२ ॥

एताः । देवऽसेनाः । सूर्यऽकेतवः । सऽचेतसः ।
अमित्रान् । नः । जयन्तु । स्वाहा ॥ १२ ॥

चतुर्थेनुवाके षष्ठं सूक्तम् ॥

इति चतुर्थोनुवाकः ॥

ज्वरभैषज्यकर्मणि "अग्निस्तक्मानम्" इति सूक्तेन लाजान् पाययति ॥
तथा तत्रैव कर्मणि दावाग्निप्रणयनं कृत्वा अनेन सूक्तेन ताम्रस्रुवेण मूर्ध्नि संपातान् आनयति ॥
तथा च सूत्रम् । "अग्निस्तक्मानम् इति लाजान् पाययति । दावे लोहितपात्रेण मूर्ध्नि संपातान् आनयति" इति [कौ° ४. ५] ॥ लाजाः कृष्णा व्रीहयः । तान् अभिमन्त्र्य पाययति मण्डं कृत्वा ॥

अग्निस्तक्मानमप बाधतामितः सोमो ग्रावा वरुणः पूतदक्षाः ।
वेदिर्बर्हिः समिधः शोशुचाना अप द्वेषांस्यमुया भवन्तु ॥ १ ॥

अग्निः । तक्मानम् । अप । बाधताम् । इतः । सोमः । ग्रावा । वरुणः । पूतऽदक्षाः ।
वेदिः । बर्हिः । सम्ऽइधः । शोशुचानाः । अप । द्वेषांसि । अमुया । भवन्तु ॥ १ ॥

अयं यो विश्वान् हरितान् कृणोष्युच्छोचयन्नग्निरिवाभिदुन्वन् ।
अधा हि तक्मन्नरसो हि भूया अधा न्यङ्ङधराङ् वा परेहि ॥ २ ॥

---

१ K V Dc न्यङ् धरा°. A B K R न्यङधरा°. D S Cs न्यङ्ङधरा°.

अयम् । यः । विश्वान् । हरितान् । कृणोषि । उत्ऽशोचयन् । अग्निःऽइव । अभिऽदुन्वन् ।
अध । हि । तक्मन् । अरसः । हि । भूयाः । अध । न्यङ् । अधराङ् । वा । परा । इहि ॥ २ ॥

यः परुषः पारुषेयोऽवध्वंस इवारुणः ।
तक्मानं विश्वधावीर्याधराञ्चं परा सुव ॥ ३ ॥

यः । परुषः । पारुषेयः । अवऽध्वंसःऽइव । अरुणः ।
तक्मानम् । विश्वधाऽवीर्य । अधराञ्चम् । परा । सुव ॥ ३ ॥

अधराञ्चं प्र हिणोमि नमः कृत्वा तक्मने ।
शकम्भरस्य मुष्टिहा पुनरेतु महावृषान् ॥ ४ ॥

अधराञ्चम् । प्र । हिनोमि । नमः । कृत्वा । तक्मने ।
शकम्ऽभरस्य । मुष्टिऽहा । पुनः । एतु । महाऽवृषान् ॥ ४ ॥

ओको अस्य मूजवन्त ओको अस्य महावृषाः ।
यावज्जातस्तक्मंस्तावानसि बल्हिकेषु न्योचरः ॥ ५ ॥

ओकः । अस्य । मूजऽवन्तः । ओकः । अस्य । महाऽवृषाः ।
यावत् । जातः । तक्मन् । तावान् । असि । बल्हिकेषु । निऽओचरः ॥ ५ ॥

तक्मन् व्याल वि गद व्यङ्ग भूरि यावय ।
दासीं निष्टक्वरीमिच्छ तां वज्रेण समर्पय ॥ ६ ॥

तक्मन् । विऽआल । वि । गद । विऽअङ्ग । भूरि । यावय ।
दासीम् । निःऽतक्वरीम् । इच्छ । ताम् । वज्रेण । सम् । अर्पय ॥ ६ ॥

तक्मन् मूजवतो गच्छ बल्हिकान् वा परस्तराम् ।
शूद्रामिच्छ प्रफर्व्यं१ तां तक्मन् वीव धूनुहि ॥ ७ ॥

तक्मन् । मूजऽवतः । गच्छ । बल्हिकान् । वा । परःऽतराम् ।
शूद्राम् । इच्छ । प्रऽफर्व्यम् । ताम् । तक्मन् । विऽइव । धूनुहि ॥ ७ ॥

महावृषान् मूजवतो बन्ध्वद्धि परेत्य ।

१ Cs हिणामि. २ B B̊ D K S̊ V Cs °स्तक्मं°. V P P̊ Cp तक्मन् ।. We with A K̊ J Dc. ३ B B̊ Bp D S̊ ३ for १. We with K K̊ R V Dc Cs. ४ Dc तांस्तं° for तां तं°.

प्रैतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमा ॥ ८ ॥

महाऽवृषान् । मूजऽवतः । बन्धु । अद्धि । पराऽइत्य ।
प्र । एतानि । तक्मने । ब्रूमः । अन्यऽक्षेत्राणि । वै । इमा ॥ ८ ॥

अन्यक्षेत्रे न रमसे वशी सन् मृडयासि नः ।
अभूदु प्रार्थस्तक्मा स गमिष्यति बल्हिकान् ॥ ९ ॥

अन्यऽक्षेत्रे । न । रमसे । वशी । सन् । मृडयासि । नः ।
अभूत् । ऊं इति । प्रऽअर्थः । तक्मा । सः । गमिष्यति । बल्हिकान् ॥ ९ ॥

यत् त्वं शीतोथो रूरः सह कासावेपयः ।
भीमास्ते तक्मन् हेतयस्ताभिः[1] स्म परि वृङ्धि नः ॥ १० ॥

यत् । त्वम् । शीतः । अथो इति । रूरः । सह । कासा । अवेपयः ।
भीमाः । ते । तक्मन् । हेतयः । ताभिः । स्म । परि । वृङ्धि । नः ॥ १० ॥

मा स्मैतान्त्सखीन् कुरुथा बलासं कासमुद्युगम् ।
मा स्मातोर्वाङैः पुनस्तत् त्वा तक्मन्नुप ब्रुवे ॥ ११ ॥

मा । स्म । एतान् । सखीन् । कुरुथाः । बलासम् । कासम् । उत्ऽयुगम् ।
मा । स्म । अतः । अर्वाङ् । आ । ऐः[2] । पुनः । तत् । त्वा । तक्मन् । उप । ब्रुवे ॥ ११ ॥

तक्मन् भ्रात्रा बलासेन स्वस्रा कासिकया सह ।
पाप्मा भ्रातृव्येण सह गच्छामुमरणं जनम् ॥ १२ ॥

तक्मन् । भ्रात्रा । बलासेन । स्वस्रा । कासिकया । सह ।
पाप्मा । भ्रातृव्येण । सह । गच्छ । अमुम् । अरणम् । जनम् ॥ १२ ॥

तृतीयकं वितृतीयं सदन्दिमुत शारदम् ।
तक्मानं शीतं रूरं ग्रैष्मं नाशय वार्षिकम् ॥ १३ ॥

तृतीयकम् । विऽतृतीयम् । सदम्ऽदिम् । उत । शारदम् ।
तक्मानम् । शीतम् । रूरम् । ग्रैष्मम् । नाशय । वार्षिकम् ॥ १३ ॥

गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः ।

---

१ A B B^h D K K^m S^m V Cs °स्ताभिस्स. We with R Dc. २ P^3 J ऐः ।. V Cp एः ।. K एः ।. We with P.

प्रैष्यंन् जनंमिव शेवुधिं तुक्मानं परिं दद्मसि ॥ १४ ॥

गन्धारिंऽभ्यः । मूजंवत्ऽभ्यः । अङ्गेभ्यः । मगधेभ्यः ।

प्रऽएष्यन् । जनंम्ऽइव । शेवुऽधिम् । तुक्मानंम् । परिं । दुद्मसि ॥ १४ ॥

इति पञ्चमेनुवाके प्रथमं सूक्तम् ॥

कृमिभैषज्यकर्मणि "ओते मे द्यावापृथिवी" इति सूक्तेन कलशमध्ये संपात्य अभिमन्त्र्य बालं पाययेत् ॥

तथा अनेन सूक्तेन [illegible] सूक्तं जपित्वा पाषाणेन [illegible] । ततः सूक्तेनाग्नौ प्रक्षिपति । ततः सूक्तेनाचामति ॥

तथा अनेन सूक्तेन आमपात्रेण अभिमन्त्र्य [illegible] दक्षिणामुखो भूत्वा पांसून् परिकिरति ॥

तथा अनेन सूक्तेन पांसून् अभिमन्त्र्य हस्तेन मथित्वा कृमिकशांश्च क्षिपति ॥

तथा अनेन सूक्तेन शान्तिवृक्षसमिध आदधाति । कृमिजम्भनम् ॥

तथा अनेन सूक्तेन [illegible] अशीर्षाः [illegible] इति सूक्तप्रयोगः ॥

तथा अनेन सूक्तेन शिग्रुबीजेन [illegible] अभिमन्त्र्य आदित्ये प्रक्षिपति ॥

तथा अनेन सूक्तेन एकविंशतिमुशीराणि [illegible] पाषाणेन कुट्टयति । ततः सूक्तं जपित्वा दर्भाग्राणि अग्निना दहति ॥

तथा अनेन सूक्तेन एकविंशतिमुशीराणि अभिमन्त्र्य आदित्याय समर्पयति ॥

तथा अनेन सूक्तेन उदकाञ्जलिना एकविंशतिमुशीराणि [illegible] संपात्य अभिमन्त्र्य आदित्यम् आप्लावयति ॥

तद् उक्तं कौशिकसूत्रे । "ओते म इति [illegible] । आमात् पांसून् । पश्चाद् अशीर्षा [illegible] "[illegible] इति [illegible] । शिग्रुभिर्[illegible] । एकविंशत्या दर्भाग्राणि [illegible] [१३] इति "[illegible] । दर्भाग्राणि [illegible] । एकविंशत्या [illegible]" इति [कौ° ३.७] ॥

ओतें मे द्यावांपृथिवी ओता देवी सरंस्वती ।

ओतौं म इन्द्रंश्चाग्निश्च क्रिमिं जम्भयतामितिं ॥ १ ॥

ओते इत्याऽउंते । मे । द्यावांपृथिवी इतिं । आऽउंता । देवी । सरंस्वती ।

आऽउंतौ । मे । इन्द्रंः । च । अग्निः । च । क्रिमिम् । जम्भयताम् । इतिं ॥ १ ॥

अस्येन्द्रं कुमारस्य क्रिमीन् धनपते जहि ।

हुता विश्वा अरांतय उग्रेण वचंसा मर्म ॥ २ ॥

अस्य । इन्द्र । कुमारस्यं । क्रिमींन् । धनऽपते । जहि ।

हुताः । विश्वाः । अरांतयः । उग्रेणं । वचंसा । मर्म ॥ २ ॥

यो अक्ष्यौ परिसर्पति यो नासें परिसर्पति ।

दुतां यो मध्यं गच्छंति तं क्रिमिं जम्भयामसि ॥ ३ ॥

१ A प्रैष्यं. २ B दद्मसि. ३ P गन्धार्दिऽभ्यः ।. ४ C॰ कृमिं.

यः । अक्ष्यौ । परिऽसर्पति । यः । नासे इति । परिऽसर्पति ।
दताम् । यः । मध्यम् । गच्छति । तम् । क्रिमिम् । जम्भयामसि ॥ ३ ॥

**सरूपौ द्वौ विरूपौ द्वौ कृष्णौ द्वौ रोहितौ द्वौ ।**
**बभ्रुश्च बभ्रुकर्णश्च गृध्रः कोकश्च[1] ते हताः ॥ ४ ॥**

सऽरूपौ । द्वौ । विऽरूपौ । द्वौ । कृष्णौ । द्वौ । रोहितौ । द्वौ ।
बभ्रुः । च । बभ्रुऽकर्णः । च । गृध्रः । कोकः । च । ते । हताः ॥ ४ ॥

**ये क्रिमयः शितिकक्षा ये कृष्णाः शितिबाहवः ।**
**ये के च विश्वरूपास्तान् क्रिमीन् जम्भयामसि ॥ ५ ॥**

ये । क्रिमयः । शितिऽकक्षाः । ये । कृष्णाः । शितिऽबाहवः ।
ये । के । च । विश्वऽरूपाः । तान् । क्रिमीन् । जम्भयामसि ॥ ५ ॥

**उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।**
**दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन् ॥ ६ ॥**

उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः । अदृष्टऽहा ।
दृष्टान् । च । घ्नन् । अदृष्टान् । च । सर्वान् । च । प्रऽमृणन् । क्रिमीन् ॥ ६ ॥

**येवाषासः कष्कषास एजत्काः शिपवित्नुकाः ।**
**दृष्टश्च हन्यतां क्रिमिरुतादृष्टश्च हन्यताम् ॥ ७ ॥**

येवाषासः । कष्कषासः । एजत्ऽकाः । शिपवित्नुकाः ।
दृष्टः । च । हन्यताम् । क्रिमिः । उत । अदृष्टः । च । हन्यताम् ॥ ७ ॥

**हतो येवाषः क्रिमीणां हतो नदनिमोत[2] ।**
**सर्वान् नि मष्मषाकरं दृषदा खल्वाँ इव ॥ ८ ॥**

हतः । येवाषः । क्रिमीणाम् । हतः । नदनिमा । उत ।
सर्वान् । नि । मष्मषा । अकरम् । दृषदा । खल्वान्ऽइव ॥ ८ ॥

**त्रिशीर्षाणं त्रिककुदं क्रिमिं सारङ्गमर्जुनम् ।**
**शृणाम्यस्य पृष्टीरपि[3] वृश्चामि यच्छिरः ॥ ९ ॥**

१ Š^m Cs कोकश्च ते. P Cp ते ।. २ B नदनिमोत. ३ A K K^m Š^m V Dc पृष्ठी°.

त्रिऽशीर्षाणम् । त्रिऽककुदम् । क्रिमिम् । सारङ्गम् । अर्जुनम् ।
शृणामि । अस्य । पृष्टीः । अपि । वृश्चामि । यत् । शिरः ॥ ९ ॥

**अत्त्रिवद् वः क्रिमयो हन्मि कण्ववज्जमदग्निवत् ।**
**अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् ॥ १० ॥**

अत्त्रिऽवत् । वः । क्रिमयः । हन्मि । कण्वऽवत् । जमदग्निऽवत् ।
अगस्त्यस्य । ब्रह्मणा । सम् । पिनष्मि । अहम् । क्रिमीन् ॥ १० ॥

**हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः ।**
**हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा ॥ ११ ॥**

हतः । राजा । क्रिमीणाम् । उत । एषाम् । स्थपतिः । हतः ।
हतः । हतऽमाता । क्रिमिः । हतऽभ्राता । हतऽस्वसा ॥ ११ ॥

**हतासो अस्य वेशसो हतासः परिवेशसः ।**
**अथो ये क्षुल्लका इव सर्वे ते क्रिमयो हताः ॥ १२ ॥**

हतासः । अस्य । वेशसः । हतासः । परिऽवेशसः ।
अथो इति । ये । क्षुल्लकाःऽइव । सर्वे । ते । क्रिमयः । हताः ॥ १२ ॥

**सर्वेषां च क्रिमीणां सर्वासां च क्रिमीणाम् ।**
**भिनद्म्यश्मना शिरो दहाम्यग्निना मुखम् ॥ १३ ॥**

सर्वेषाम् । च । क्रिमीणाम् । सर्वासाम् । च । क्रिमीणाम् ।
भिनद्मि । अश्मना । शिरः । दहामि । अग्निना । मुखम् ॥ १३ ॥

इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ॥

पौरोहित्य कर्मणि "सविता प्रसवानाम्" इति सूक्तेन पूर्वेणाहृताः समिध आदधातीति केशवः । तथा च सूत्रम् । "सविता प्रसवानाम् इति पौरोहित्ये वत्सन विश्वल्तोपाः समिध आधाय" इति [कौ° २.८] । विश्वौ लुप्यते चन्द्रोऽस्याम् इति विश्वल्तोपा अमावास्या । तस्यां भवा एकादशीः समिधः । चन्द्रमसः सर्वलोपाद् अमावास्या विश्वल्तोपेति हि दारिलः ॥

तथा अस्य सूक्तस्य विवाहे आज्यहोमे विनियोगः । तथा च सूत्रम् । "सविता प्रसवानाम् इति" इति [कौ° १०.४] ॥

तथा चातुर्मास्येषु वैश्वदेवपर्वणि सावित्रं यागं "सविता प्रसवानाम्" इति ब्रह्मा अनुमन्त्रयेत । तद् उक्तं वैताने । "सविता प्रसवानाम्" इति [वै° २.४] ॥

**सविता प्रसवानामधिपतिः स मावतु ।**

१ J V Cp पृष्टीः I. We with P P. २ See II. 32. 5 and foot-note. The MSS. here do not give the three verses 10-12 but refer to II. 32. 3-5. ३ P J क्रिमीणाम् I. We with P Cp.

अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥ १ ॥

सविता । प्रऽसवानाम् । अधिऽपतिः । सः । मा । अवतु ।
अस्मिन् । ब्रह्मणि । अस्मिन् । कर्मणि । अस्याम् । पुरःऽधायाम् । अस्याम् । प्रतिऽस्थायाम् । अस्याम् । चित्त्याम् । अस्याम् । आऽकूत्याम् । अस्याम् । आऽशिषि । अस्याम् । देवऽहूत्याम् । स्वाहा ॥ १ ॥

अग्निर्वनस्पतीनामधिपतिः स मावतु ।० ॥ २ ॥

अग्निः । वनस्पतीनाम् । अधिऽपतिः । सः । मा । अवतु ।० ॥ २ ॥

द्यावापृथिवी दातॄणामधिपत्नी ते मावताम् ।० ॥ ३ ॥

द्यावापृथिवी इति । दातॄणाम् । अधिपत्नी इत्यधिऽपत्नी । ते इति । मा । अवताम् ।० ॥ ३ ॥

वरुणोपामधिपतिः स मावतु ।० ॥ ४ ॥

वरुणः । अपाम् । अधिऽपतिः । सः । मा । अवतु ।० ॥ ४ ॥

मित्रावरुणौ वृष्ट्याधिपती तौ मावताम् ।० ॥ ५ ॥

मित्रावरुणौ । वृष्ट्या[१] । अधिपती इत्यधिऽपती । तौ । मा । अवताम् ।० ॥ ५ ॥

मरुतः पर्वतानामधिपतयस्ते मावन्तु ।० ॥ ६ ॥

मरुतः । पर्वतानाम् । अधिऽपतयः । ते । मा । अवन्तु ।० ॥ ६ ॥

सोमो वीरुधामधिपतिः स मावतु ।० ॥ ७ ॥

सोमः । वीरुधाम् । अधिऽपतिः । सः । मा । अवतु ।० ॥ ७ ॥

वायुरन्तरिक्षस्याधिपतिः स ०।० ॥ ८ ॥

वायुः । अन्तरिक्षस्य । अधिऽपतिः ।० ॥ ८ ॥

सूर्यश्चक्षुषामधिपतिः स ०।० ॥ ९ ॥

सूर्यः । चक्षुषाम् । अधिऽपतिः ।० ॥ ९ ॥

चन्द्रमा नक्षत्राणामधिपतिः स ०।० ॥ १० ॥

चन्द्रमाः । नक्षत्राणाम् । अधिऽपतिः ।० ॥ १० ॥

---

१ So we with all our authorities. The pada-version should read वृष्ट्याः ।.

इन्द्रो दिवोधिपतिः स ०।० ॥ ११ ॥

इन्द्रः । दिवः । अधिऽपतिः ।० ॥ ११ ॥

मरुतां पिता पशूनामधिपतिः स ०।० ॥ १२ ॥

मरुताम् । पिता । पशूनाम् । अधिऽपतिः ।० ॥ १२ ॥

मृत्युः प्रजानामधिपतिः स ०।० ॥ १३ ॥

मृत्युः । प्रऽजानाम् । अधिऽपतिः ।० ॥ १३ ॥

यमः पितॄणामधिपतिः स मावतु ।० ॥ १४ ॥

यमः । पितॄणाम् । अधिऽपतिः । सः । मा । अवतु ।० ॥ १४ ॥

पितरः परे ते मावन्तु ।० ॥ १५ ॥

पितरः । परे । ते । मा । अवन्तु ।० ॥ १५ ॥

तता अवरे ते ०।० ॥ १६ ॥

तताः । अवरे । ते ।० ॥ १६ ॥

ततस्ततामहास्ते मावन्तु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां
चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥१७॥

ततः । ततामहाः । ते । मा । अवन्तु ।
अस्मिन् । ब्रह्मणि । अस्मिन् । कर्मणि । अस्याम् । पुरःऽधायाम् । अस्याम् । प्रतिऽस्था-याम् । अस्याम् । चित्त्याम् । अस्याम् । आऽकूत्याम् । अस्याम् । आऽशिषि । अस्याम् । देवऽहूत्याम् । स्वाहा ॥ १७ ॥

इति पञ्चमेनुवाके तृतीयं सूक्तम् ॥

गर्भाधानाख्ये कर्मणि "पर्वताद् दिवः" इति सूक्तेन आगमकृशरं चरुद्वयं श्रपयित्वा संपात्य अभिमन्त्र्य द्वितीयं चरुं युग-च्छिद्रेण संपात्य अभिमन्त्र्य आशयति ॥

तथा तत्रैव कर्मणि फलूनांश्च पलाशत्सरुकशिपुत्ते निगृह्य "पर्वताद् दिवः" इति सूक्तेन अभिमन्त्र्य शिरसि आधाय ततो मैथुनं करोति ॥

तद् उक्तं कौशिकेन । "पर्वताद् दिव इत्यागमकृशरम् आशयति । युगतर्द्मना संपातवन्तं द्वितीयम् । फलूनांश्च पलाशत्सरु-कशिपुत्ते निकर्ष्याधाय शिरसि ग्रामं प्रविशति" इति [कौ° ४. ११] ॥

पर्वताद् दिवो योनेरङ्गादङ्गात् समाभृतम् ।

शेपो गर्भस्य रेतोधाः[1] सरौ पर्णमिवा दधत् ॥ १ ॥

पर्वतात् । दिवः । योनेः । अङ्गात्ऽअङ्गात् । सम्ऽआभृतम् ।

शेपः । गर्भस्य । रेतःऽधाः । सरौ । पर्णम्ऽइव । आ । दधत् ॥ १ ॥

यथेयं पृथिवी मही भूतानां गर्भमादधे ।

एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे ॥ २ ॥

यथा । इयम् । पृथिवी । मही । भूतानाम् । गर्भम् । आऽदधे ।

एव । आ । दधामि । ते । गर्भम् । तस्मै । त्वाम् । अवसे । हुवे ॥ २ ॥

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।

गर्भं ते अश्विनोभा धत्तां पुष्करस्रजा ॥ ३ ॥

गर्भम् । धेहि । सिनीवालि । गर्भम् । धेहि । सरस्वति ।

गर्भम् । ते । अश्विना । उभा । आ । धत्ताम् । पुष्करऽस्रजा ॥ ३ ॥

गर्भं ते मित्रावरुणौ गर्भं देवो बृहस्पतिः ।

गर्भं त इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते ॥ ४ ॥

गर्भम् । ते । मित्रावरुणौ । गर्भम् । देवः । बृहस्पतिः ।

गर्भम् । ते । इन्द्रः । च । अग्निः । च । गर्भम् । धाता । दधातु । ते ॥ ४ ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।

आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ ५ ॥

विष्णुः । योनिम् । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु ।

आ । सिञ्चतु । प्रजाऽपतिः । धाता । गर्भम् । दधातु । ते ॥ ५ ॥

यद् वेद राजा वरुणो यद् वा देवी सरस्वती ।

यदिन्द्रो वृत्रहा वेद[2] तद् गर्भकरणं पिब ॥ ६ ॥

यत् । वेद । राजा । वरुणः । यत् । वा । देवी । सरस्वती ।

यत् । इन्द्रः । वृत्रऽहा । वेद । तत् । गर्भऽकरणम् । पिब ॥ ६ ॥

गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।

---

१ So our MSS. Should we perhaps read गर्भस्य रेतो धाः ? २ S̈ वेद. P वेद ।.

गर्भो विश्वस्य भूतस्य सो अग्ने गर्भमेह धाः ॥ ७ ॥

गर्भः । असि । ओषधीनाम् । गर्भः । वनस्पतीनाम् ।

गर्भः । विश्वस्य । भूतस्य । सः । अग्ने । गर्भम् । आ । इह । धाः ॥ ७ ॥

अधि स्कन्द वीरयस्व गर्भमा धेहि योन्याम् ।

वृषासि वृष्ण्यावन् प्रजायै त्वा नयामसि ॥ ८ ॥

अधि । स्कन्द । वीरयस्व । गर्भम् । आ । धेहि । योन्याम् ।

वृषा । असि । वृष्ण्यऽवन् । प्रऽजायै । त्वा । आ । नयामसि ॥ ८ ॥

वि जिहीष्व बार्हत्सामे गर्भस्ते योनिमा शयाम् ।

अदुष्टे देवाः पुत्रं सोमपा उभयाविनम् ॥ ९ ॥

वि । जिहीष्व । बार्हत्ऽसामे । गर्भः । ते । योनिम् । आ । शयाम् ।

अदुः । ते । देवाः । पुत्रम् । सोमऽपाः । उभयाविनम् ॥ ९ ॥

धातः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।

पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥ १० ॥

धातः । श्रेष्ठेन । रूपेण । अस्याः । नार्याः । गवीन्योः ।

पुमांसम् । पुत्रम् । आ । धेहि । दशमे । मासि । सूतवे ॥ १० ॥

त्वष्टः श्रेष्ठेन ०।० ॥ ११ ॥

त्वष्टः । श्रेष्ठेन ।० ॥ ११ ॥

सवितः श्रेष्ठेन ०।० ॥१२ ॥

सवितः । श्रेष्ठेन ।० ॥ १२ ॥

प्रजापते श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।

पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥ १३ ॥

प्रजाऽपते । श्रेष्ठेन । रूपेण । अस्याः । नार्याः । गवीन्योः ।

पुमांसम् । पुत्रम् । आ । धेहि । दशमे । मासि । सूतवे ॥ १३ ॥

इति पञ्चमेनुवाके चतुर्थं सूक्तम् ॥

१ A B K K̄ S V D^e C^p. वीडयस्व. We with D R C_s and P P J. २ C_s जंहीष्व.
३ P °सामे ।.

"यजूंषि यज्ञे" इति सूक्तेन नवशालायां पुष्टिकामो घृतं मधुमिश्रं जुहुयात्। तथा च सूत्रम्। "यजूंषि यज्ञे [५. २६] इति नवशालायां सर्पिर्मधुमिश्रं जुहोति। दोषो गाय [६. १] इति द्वितीयाम्। युक्ताभ्यां तृतीयाम्" इति [कौ° ३. ६]॥ आहुतिम् इति शेषः॥

ज्योतिष्टोमे "यजूंषि यज्ञे" इति सूक्तेन आज्यं जुहोति। "यजूंषि यज्ञ इति च" [वै° ३. ६] इति वैतानसूत्रात्॥

**यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह वो युनक्तु॥ १॥**

यजूंषि। यज्ञे। सम्ऽइधः। स्वाहा। अग्निः। प्रऽविद्वान्। इह। वः। युनक्तु॥ १॥

**युनक्तु देवः सविता प्रजानन्नस्मिन् यज्ञे महिषः स्वाहा॥ २॥**

युनक्तु। देवः। सविता। प्रऽजानन्। अस्मिन्। यज्ञे। महिषः। स्वाहा॥ २॥

**इन्द्र उक्थामदान्यस्मिन् यज्ञे प्रविद्वान् युनक्तु सुयुजः स्वाहा॥ ३॥**

इन्द्रः। उक्थऽमदानि। अस्मिन्। यज्ञे। प्रऽविद्वान्। युनक्तु। सुऽयुजः। स्वाहा॥ ३॥

**प्रैषा यज्ञे निविदः स्वाहा शिष्टाः पत्नीभिर्वहतेह युक्ताः॥ ४॥**

प्रऽएषाः। यज्ञे। निऽविदः। स्वाहा। शिष्टाः। पत्नीभिः। वहत। इह। युक्ताः॥ ४॥

**छन्दांसि यज्ञे मरुतः स्वाहा मातेव पुत्रं पिपृतेह युक्ताः॥ ५॥**

छन्दांसि। यज्ञे। मरुतः। स्वाहा। माताऽइव। पुत्रम्। पिपृत। इह। युक्ताः॥ ५॥

**एयमगन् बर्हिषा प्रोक्षणीभिर्यज्ञं तन्वानादितिः स्वाहा॥ ६॥**

आ। इयम्। अगन्। बर्हिषा। प्रऽउक्षणीभिः। यज्ञम्। तन्वाना। अदितिः। स्वाहा॥ ६॥

**विष्णुर्युनक्तु बहुधा तपांस्यस्मिन् यज्ञे सुयुजः स्वाहा॥ ७॥**

विष्णुः। युनक्तु। बहुऽधा। तपांसि। अस्मिन्। यज्ञे। सुऽयुजः। स्वाहा॥ ७॥

**त्वष्टा युनक्तु बहुधा नु रूपा अस्मिन् यज्ञे सुयुजः स्वाहा॥ ८॥**

त्वष्टा। युनक्तु। बहुऽधा। नु। रूपाः[1]। अस्मिन्। यज्ञे। सुऽयुजः। स्वाहा॥ ८॥

**भगो युनक्त्वाशिषो न्व[2]स्मा अस्मिन् यज्ञे प्रविद्वान् युनक्तु सुयुजः स्वाहा॥ ९॥**

भगः। युनक्तु। आऽशिषः। नु। अस्मै। अस्मिन्। यज्ञे। प्रऽविद्वान्। युनक्तु। सुऽयुजः। स्वाहा॥ ९॥

**सोमो युनक्तु बहुधा पयांस्यस्मिन् यज्ञे सुयुजः स्वाहा॥ १०॥**

सोमः। युनक्तु। बहुऽधा। पयांसि। अस्मिन्। यज्ञे। सुऽयुजः। स्वाहा॥ १०॥

**इन्द्रो युनक्तु बहुधा वीर्याण्यस्मिन् यज्ञे सुयुजः स्वाहा॥ ११॥**

१ So P P̊ J Cr. Only J once read रूपा। २ B B̊ D S̊ Cs ३ for १.

इन्द्रः । युनक्तु । बहुऽधा । वीर्याणि । अस्मिन् । यज्ञे । सुऽयुजः । स्वाहा ॥ ११ ॥

**अश्विना ब्रह्मणा यातमर्वाञ्चौ वषट्कारेण यज्ञं वर्धयन्तौ ।**

**बृहस्पते ब्रह्मणा याह्यर्वाङ् यज्ञो अयं स्वरिदं यजमानाय स्वाहा ॥१२॥**

अश्विना । ब्रह्मणा । आ । यातम् । अर्वाञ्चौ । वषट्ऽकारेण । यज्ञम् । वर्धयन्तौ ।

बृहस्पते । ब्रह्मणा । आ । याहि । अर्वाङ् । यज्ञः । अयम् । स्वः । इदम् । यजमानाय ।

स्वाहा ॥ १२ ॥

पञ्चमं सूक्तम् ॥

इति पञ्चमोनुवाकः ॥

[illegible]: "ऊर्ध्वा अस्य" इति सूक्तेन अग्नौ [illegible] औदुम्बर [illegible] आज्यं जुहोति ॥

तथा अग्न्याधाने आगमशाकुनादौ [illegible] अनेन सूक्तेन [illegible] आज्यं जुहोति । [illegible] दर्शनं ॥

तद् उक्तं कौशिकेन । "ऊर्ध्वा अस्येति [illegible] औदुम्बर [illegible] अग्निं जुहोति । [illegible] अभि[illegible] आगमशाकुनाः" इति [कौ० ५, ६] ॥ [illegible] आगमशाकुनाः ॥

तथा [illegible] कर्मणि अस्य सूक्तस्य विनियोग उक्तः । [illegible] "[illegible]" इति सूक्ते [५, १२] द्रष्टव्यम् ॥

**ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः ।**

**द्युमत्तमा सुप्रतीकः ससूनुस्तनूनपादसुरो भूरिपाणिः ॥ १ ॥**

ऊर्ध्वाः । अस्य । सम्ऽइधः । भवन्ति । ऊर्ध्वा । शुक्रा । शोचींषि । अग्नेः ।

द्युमत्ऽतमा । सुऽप्रतीकः । सऽसूनुः । तनूऽनपात् । असुरः । भूरिऽपाणिः ॥ १ ॥

**देवो देवेषु देवः पथो अनक्ति मध्वा घृतेन ॥ २ ॥**

देवः । देवेषु । देवः । पथः । अनक्ति । मध्वा । घृतेन ॥ २ ॥

**मध्वा यज्ञं नक्षति प्रैणानो नराशंसो अग्निः सुकृद् देवः सविता विश्ववारः ॥ ३ ॥**

मध्वा । यज्ञम् । नक्षति । प्रैणानः । नराशंसः । अग्निः । सुऽकृत् । देवः । सविता । विश्वऽवारः ॥ ३ ॥

**अच्छायमेति शवसा घृता चिदीडानो वह्निर्नमसा ॥ ४ ॥**

अच्छ । अयम् । एति । शवसा । घृता । चित् । ईडानः । वह्निः । नमसा ॥ ४ ॥

१ A नरा°. P Cr नराशंसः ।.

अग्निः स्रुचो अध्वरेषु प्रयक्षु स यक्षदस्य महिमानमग्नेः ॥ ५ ॥

अग्निः । स्रुचः । अध्वरेषु । प्रऽयक्षु । सः । यक्षत् । अस्य । महिमानम् । अग्नेः ॥ ५ ॥

तरी मन्द्रासु प्रयक्षु वसवश्चातिष्ठन् वसुधातरश्च ॥ ६ ॥

तरी । मन्द्रासु । प्रऽयक्षु । वसवः । च । अतिष्ठन् । वसुऽधातरः । च ॥ ६ ॥

द्वारो देवीरन्वस्य विश्वे व्रतं रक्षन्ति विश्वहा ॥ ७ ॥

द्वारः । देवीः । अनु । अस्य । विश्वे । व्रतम् । रक्षन्ति । विश्वहा ॥ ७ ॥

उरुव्यचसाग्नेर्धाम्ना पत्यमाने ।

आ सुष्वयन्ती यजते[1] उपाके उषासानक्तेमं यज्ञमवतामध्वरं नः ॥ ८ ॥

उरुऽव्यचसा । अग्नेः । धाम्ना । पत्यमाने इति ।

आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । इमम् । यज्ञम् । अवताम् । अध्वरम् । नः ॥ ८ ॥

दैवा[2] होतार ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वयाभि गृणत गृणता नः स्विष्टये ।

तिस्रो देवीर्बर्हिरेदं सदन्तामिडा सरस्वती मही भारती गृणाना ॥ ९ ॥

दैवाः[3] । होतारः । ऊर्ध्वम् । अध्वरम् । नः । अग्नेः । जिह्वया । अभि । गृणत । गृणत । नः । सुऽइष्टये ।

तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्ताम् । इडा । सरस्वती । मही । भारती । गृणाना ॥ ९ ॥

तन्नस्तुरीपमद्भुतं पुरुक्षु । देव त्वष्टा रायस्पोषं वि ष्य नाभिमस्य ॥ १० ॥

तत् । नः । तुरीपम्[4] । अत्ऽभुतम्[5] । पुरुऽक्षु[6] ॥ देव । त्वष्टः । रायः । पोषम् । वि । स्य । नाभिम् । अस्य[7] ॥ १० ॥

वनस्पतेव सृजा रराणः । त्मना देवेभ्यो अग्निर्हव्यं शमिता स्वदयतु ॥ ११ ॥

वनस्पते । अव । सृज । रराणः ॥ त्मना । देवेभ्यः । अग्निः । हव्यम् । शमिता । स्वदयतु ॥ ११ ॥

अग्ने स्वाहा कृणुहि जातवेदः । इन्द्राय यज्ञं विश्वे देवा हविरिदं जुषन्ताम् ॥ १२ ॥

---

१ Cs रजते. २ K दैव्या. ३ K दैव्याः ।. ४ P P̊ तुरीयम् ।. ५ P P̊ अत्ऽभूतम् ।. Cp अद्भूतम् ।. ६ P J पुरुक्षु ।. We with K V P̊ Cp. ७ P अस्य ।.

अग्ने । स्वाहा । कृणुहि । जातऽवेदः ॥ इन्द्राय । यज्ञम् । विश्वे । देवाः । हविः । इदम् । जुषन्ताम् ॥ १२ ॥

इति षष्ठेऽनुवाके प्रथमं सूक्तम् ॥

सर्वसंपत्कर्मसु "नव प्राणान्" इति सूक्तस्य विनियोगः ॥

तथा आयुष्कामस्य हिरण्यमणिबन्धने अस्य विनियोगः ॥ एतद्दुक्तविस्तरः "यदाबध्नन्" इति सूक्ते [१.३५] द्रष्टव्यः ॥

उपनयनकर्मण्यपि आयुष्कामस्य ब्रह्मचारिण आज्यहोमे एतद् विनियुक्तम् अस्य आयुष्यगणे पाठात् । सूत्रितं हि । "मेधाजननायुष्यैर्जुहुयात्" इति [कौ० ७.८] ॥

तथा अनेन सूक्तेन उपनयनानन्तरम् आयुष्कामस्य माणवकस्य सुवर्णरजतलोह[मयानि] त्रीणि शकलान्येकत्र कृत्वा सूत्रे मणिं त्रिवृतं कृत्वा संपाताभिमन्त्र्य बध्नाति इति केशवः । तद् उक्तं कौशिकेन । "उपनयनम्" [कौ० ७.६] प्रक्रम्य "नव प्राणान् इति मन्त्रोक्तम्" इति [कौ० ७.९] ॥

तथा "वैश्वदेवीम् भयकामस्य भक्षणे च" इति [न० क० १७] विहितायां वैश्वदेव्याख्यायां महाशान्तौ त्रिवृन्मणिबन्धनेऽपि अस्य सूक्तस्य विनियोगः । तद् उक्तं नक्षत्रकल्पे । "नव प्राणान् इति त्रिवृतं वैश्वदेव्याम्" इति [न० क० १९] ॥

**नव॑ प्रा॒णान्नव॑भि॒: सं मि॑मीते दीर्घायु॒त्वाय॑ श॒तशा॑रदाय ।**
**हरि॑ते॒ त्रीणि॑ रज॒ते त्रीण्यय॑सि॒ त्रीणि॒ तप॒साविष्ठि॑तानि ॥ १ ॥**

नव॑ । प्रा॒णान् । न॒वऽभि॑ः । सम् । मि॒मी॒ते॒ । दी॒र्घा॒यु॒ऽत्वाय॑ । श॒तऽशा॑रदाय ।
हरि॑ते । त्रीणि॑ । र॒ज॒ते । त्रीणि॑ । अय॑सि । त्रीणि॑ । तप॑सा । आऽविष्ठि॑तानि ॥ १ ॥

**अ॒ग्निः सूर्य॑श्च॒न्द्रमा॒ भूमि॒रापो॒ द्यौर॒न्तरि॑क्षं प्र॒दिशो॒ दिश॑श्च ।**
**आ॒र्त॒वा ऋ॒तुभि॑: संविदा॒ना अ॒नेन॑ मा त्रि॒वृता॑ पारयन्तु ॥ २ ॥**

अ॒ग्निः । सूर्य॑ः । च॒न्द्रमा॑ः । भूमि॑ः । आप॑ः । द्यौः । अ॒न्तरि॑क्षम् । प्र॒ऽदिश॑ः । दिश॑ः । च॒ ।
आ॒र्त॒वाः । ऋ॒तुऽभि॑ः । स॒म्ऽवि॒दा॒नाः । अ॒नेन॑ । मा॒ । त्रि॒ऽवृता॑ । पा॒र॒य॒न्तु॒ ॥ २ ॥

**त्रय॒: पोषा॑स्त्रि॒वृति॑ श्रयन्ताम॒नक्तु॑ पू॒षा पय॑सा घृ॒तेन॑ ।**
**अन्न॑स्य भू॒मा पुरु॑षस्य भू॒मा भू॒मा प॒शूनां॒ त इ॒ह श्र॑यन्ताम् ॥ ३ ॥**

त्रय॑ः । पोषा॑ः । त्रि॒ऽवृति॑ । श्र॒य॒न्ता॒म् । अ॒नक्तु॑ । पू॒षा । पय॑सा । घृ॒तेन॑ ।
अन्न॑स्य । भू॒मा । पुरु॑षस्य । भू॒मा । भू॒मा । प॒शू॒नाम् । ते । इ॒ह । श्र॒य॒न्ता॒म् ॥ ३ ॥

**इ॒मम॑दित्या॒ वसु॑ना॒ समु॑क्षते॒मम॑ग्ने वर्धय वावृधा॒नः ।**

1 So we with A B B D K K S V Dc Cs P P J Cp. R °विष्ठितानि. 2 B °वृति. A B D K R S Cs °वृतिः. A has cancelled the visarga. We with K V Dc P P J Cp. 3 K K °दित्या.

इममिन्द्र सं सृज वीर्येणास्मिन् त्रिवृच्छ्रयतां पोषयिष्णु ॥ ४ ॥

इमम्। आदित्याः। वसुना। सम्। उक्षत। इमम्। अग्ने। वर्धय। ववृधानः।

इमम्। इन्द्र। सम्। सृज। वीर्येणि। अस्मिन्। त्रिऽवृत्। श्रयताम्। पोषयिष्णु ॥ ४ ॥

भूमिष्ट्वा पातु हरितेन विश्वभृदग्निः पिपर्त्वयसा सजोषाः।

वीरुद्भिष्टे अर्जुनं संविदानं दक्षं दधातु सुमनस्यमानम् ॥ ५ ॥

भूमिः। त्वा। पातु। हरितेन। विश्वऽभृत्। अग्निः। पिपर्तु। अयसा। सऽजोषाः।

वीरुत्ऽभिः। ते। अर्जुनम्। सम्ऽविदानम्। दक्षम्। दधातु। सुऽमनस्यमानम् ॥ ५ ॥

त्रेधा जातं जन्मनेदं हिरण्यमग्नेरेकं प्रियतमं बभूव सोमस्यैकं हिंसितस्य परापतत्।

अपामेकं वेधसां रेत आहुस्तत् ते हिरण्यं त्रिवृदस्त्वायुषे ॥ ६ ॥

त्रेधा। जातम्। जन्मना। इदम्। हिरण्यम्। अग्नेः। एकम्। प्रियऽतमम्। बभूव। सोमस्य। एकम्। हिंसितस्य। परा। अपतत्।

अपाम्। एकम्। वेधसाम्। रेतः। आहुः। तत्। ते। हिरण्यम्। त्रिऽवृत्। अस्तु। आयुषे ॥ ६ ॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्।

त्रेधामृतस्य चक्षणं त्रीण्यायूंषि तेकरम् ॥ ७ ॥

त्रिऽआयुषम्। जमत्ऽअग्नेः। कश्यपस्य[1]। त्रिऽआयुषम्।

त्रेधा। अमृतस्य। चक्षणम्। त्रीणि। आयूंषि[2]। ते। अकरम् ॥ ७ ॥

त्रयः सुपर्णास्त्रिवृता[3] यदायन्नेकाक्षरमभिसंभूय शक्राः।

प्रत्यौहन्मृत्युममृतेन साकमन्तर्दधाना दुरितानि विश्वा ॥ ८ ॥

त्रयः। सुऽपर्णाः। त्रिऽवृता। यत्। आयन्। एकऽअक्षरम्। अभिऽसंभूय। शक्राः।

प्रति। औहन्। मृत्युम्। अमृतेन। साकम्। अन्तःऽदधानाः[4]। दुःऽइतानि। विश्वा ॥ ८ ॥

दिवस्त्वा पातु हरितं मध्यात् त्वा पात्वर्जुनम्।

---

१ P कस्यपस्य। २ P आयुंषि। ३ By त्रिवृत् it seems we have to take the gold bead consisting of three kinds of gold, or gold believed to come from three sources. ४ P J K V Cp °दधाना। We with P.

भूम्या अयस्मयं पातु प्रागाद् देवपुरा अयम् ॥ ९ ॥

दिवः । त्वा । पातु । हरितम् । मध्यात् । त्वा । पातु । अर्जुनम् ।

भूम्याः । अयस्मयम् । पातु । प्र । अगात् । देवऽपुराः । अयम् ॥ ९ ॥

इमास्तिस्रो देवपुरास्तास्त्वा रक्षन्तु सर्वतः ।

तास्त्वं बिभ्रद् वर्चस्व्युत्तरो द्विषतां भव ॥ १० ॥

इमाः । तिस्रः । देवऽपुराः । ताः । त्वा । रक्षन्तु । सर्वतः ।

ताः । त्वम् । बिभ्रत् । वर्चस्वी । उत्तरः । द्विषताम् । भव ॥ १० ॥

पुरं देवानाममृतं हिरण्यं य आबेधे प्रथमो देवो अग्रे ।

तस्मै नमो दश प्राचीः कृणोम्यनु मन्यतां त्रिवृदाबधे मे ॥ ११ ॥

पुरम् । देवानाम् । अमृतम् । हिरण्यम् । यः । आऽबेधे । प्रथमः । देवः । अग्रे ।

तस्मै । नमः । दश । प्राचीः । कृणोमि । अनु । मन्यताम् । त्रिऽवृत् । आऽबधे । मे ॥ ११ ॥

आ त्वा चृतत्वर्यमा पूषा बृहस्पतिः । अहर्जातस्य यन्नाम तेन त्वाति चृतामसि ॥ १२ ॥

आ । त्वा । चृततु । अर्यमा । आ । पूषा । आ । बृहस्पतिः ॥ अहःऽजातस्य । यत् । नाम ।
तेन । त्वा । अति । चृतामसि ॥ १२ ॥

ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा । संवत्सरस्य तेजसा तेन संहनु कृण्मसि ॥ १३ ॥

ऋतुऽभिः । त्वा । आर्तवैः । आयुषे । वर्चसे । त्वा ॥ सम्ऽवत्सरस्य । तेजसा । तेन ।
सम्ऽहनु । कृण्मसि ॥ १३ ॥

घृतादुल्लुप्तं मधुना समक्तं भूमिदृंहमच्युतं पारयिष्णु ।

भिन्दत् सपत्नानधरांश्च कृण्वदा मा रोह महते सौभगाय ॥ १४ ॥

---

१ P देवऽपुरः ।. २ B B̈ °स्व्युत्तरो changed to °स्युत्तरो. K °स्व्युत्तरो. A D °स्युत्तरो corrected from °स्व्युत्तरो. We with R S̈ V Dc Cs P̈ J Cp. ३ A B̈ D K K̈ R S̈ V Dc मंन्यंतां. P P̈ J V Cp मुन्यंताम् ।. We with Cs. ४ B doubtful between चृ° and वृ°. K K̈ V P̈ वृ°. We with A B̈ D R S̈ Dc Cs P J Cp. ५ A B S̈ भिंदन्त्सु°. B̈ D K K̈ R V Dc भिंदंत्सु°. P P̈ J V Cp भिंदन् ।. We with Cs.

घृतात् । उत्ऽलुप्तम् । मधुना । सम्ऽअंक्तम् । भूमिऽदृंहम् । अच्युतम् । पारयिष्णु ।
भिन्दत् । सऽपत्नान् । अधरान् । च । कृण्वत् । आ । मा । रोह । महते । सौभगाय ॥ १४ ॥

इति षष्ठेनुवाके द्वितीयं सूक्तम् ॥

"पुरस्ताद् युक्तः" इति सूक्तस्य चातनगणे पाठाद् यत्रयत्र चातनगणस्य विनियोगस्तत्रतत्रास्य सूक्तस्य विनियोगः । विस्तरस्तु "स्तुवानम् अग्ने" इति [१.७] सूक्ते कृतः ॥

पुरस्ताद् युक्तो वह जातवेदोऽग्ने विद्धि क्रियमाणं यथेदम् ।
त्वं भिषग् भेषजस्यासि कर्ता त्वया गामश्वं पुरुषं सनेम ॥ १ ॥

पुरस्तात् । युक्तः । वह । जातऽवेदः । अग्ने । विद्धि । क्रियमाणम् । यथा । इदम् ।
त्वम् । भिषक् । भेषजस्य । असि । कर्ता । त्वया । गाम् । अश्वम् । पुरुषम् । सनेम ॥ १ ॥

तथा तदग्ने कृणु जातवेदो विश्वेभिर्देवैः सह संविदानः ।
यो नो दिदेव यतमो जघास यथा सो अस्य परिधिष्पताति ॥ २ ॥

तथा । तत् । अग्ने । कृणु । जातऽवेदः । विश्वेभिः । देवैः । सह । सम्ऽविदानः ।
यः । नः । दिदेव । यतमः । जघास । यथा । सः । अस्य । परिऽधिः । पताति ॥ २ ॥

यथा सो अस्य परिधिष्पताति तथा तदग्ने कृणु जातवेदः ।
विश्वेभिर्देवैः सह संविदानः ॥ ३ ॥

यथा । सः । अस्य । परिऽधिः । पताति । तथा । तत् । अग्ने । कृणु । जातऽवेदः ।
विश्वेभिः । देवैः । सह । सम्ऽविदानः ॥ ३ ॥

अक्ष्यौ३ नि विध्य हृदयं नि विध्य जिह्वां नि तृन्द्धि प्र दतो मृणीहि ।
पिशाचो अस्य यतमो जघासाग्ने यविष्ठ प्रति तं शृणीहि ॥ ४ ॥

अक्ष्यौ । नि । विध्य । हृदयम् । नि । विध्य । जिह्वाम् । नि । तृन्द्धि । प्र । दतः । मृणीहि ।
पिशाचः । अस्य । यतमः । जघास । अग्ने । यविष्ठ । प्रति । तम् । शृणीहि ॥ ४ ॥

यदस्य हृतं विहृतं यत् पराभृतमात्मनो जग्धं यतमत् पिशाचैः ।
तदग्ने विद्वान् पुनरा भर त्वं शरीरे मांसमसुमेरयामः ॥ ५ ॥

१ P कृण्वत् ।. We with P J V Cp. २ P V असि ।. ३ P अस्य ।. We with P J Cp.
४ B D K K Dc Cs यविष्ट. P यविष्ट ।. ५ P अस्य ।.

यत् । अस्य । हृतम् । विऽहृतम् । यत् । पराऽभृतम् । आत्मनः । जग्धम् । यतमत् । पिशाचैः ।
तत् । अग्ने । विद्वान् । पुनः । आ । भर । त्वम् । शरीरे । मांसम् । असुम् । आ । ईरयामः ॥ ५ ॥

आमे सुपक्वे शबले विपक्वे यो मा पिशाचो अशने ददम्भ ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३ऽयमस्तु ॥ ६ ॥

आमे । सुऽपक्वे । शबले । विऽपक्वे । यः । मा । पिशाचः । अशने । ददम्भ ।
तत् । आत्मना । प्रऽजया । पिशाचाः । वि । यातयन्ताम् । अगदः । अयम् । अस्तु ॥ ६ ॥

क्षीरे मा मन्थे यतमो ददम्भाकृष्टपच्ये अशने धान्ये३ यः । तदा० ॥ ७ ॥

क्षीरे । मा । मन्थे । यतमः । ददम्भ । अकृष्टऽपच्ये । अशने । धान्ये । यः ॥०॥ ७ ॥

अपां मा पाने यतमो ददम्भ क्रव्याद् यातूनां शयने शयानम् । तदा० ॥ ८ ॥

अपाम् । मा । पाने । यतमः । ददम्भ । क्रव्यऽअत् । यातूनाम् । शयने । शयानम् ॥०॥ ८ ॥

दिवा मा नक्तं यतमो ददम्भ क्रव्याद् यातूनां शयने शयानम् ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३ऽयमस्तु ॥ ९ ॥

दिवा । मा । नक्तम् । यतमः । ददम्भ । क्रव्यऽअत् । यातूनाम् । शयने । शयानम् ।
तत् । आत्मना । प्रऽजया । पिशाचाः । वि । यातयन्ताम् । अगदः । अयम् । अस्तु ॥ ९ ॥

क्रव्यादमग्ने रुधिरं पिशाचं मनोहनं जहि जातवेदः ।
तमिन्द्रो वाजी वज्रेण हन्तु च्छिनत्तु सोमः शिरो अस्य धृष्णुः ॥ १० ॥

क्रव्यऽअदम् । अग्ने । रुधिरम् । पिशाचम् । मनःऽहनम् । जहि । जातऽवेदः ।
तम् । इन्द्रः । वाजी । वज्रेण । हन्तु । छिनत्तु । सोमः । शिरः । अस्य । धृष्णुः ॥ १० ॥

सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्युः ।
सहमूराननु दह क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ ११ ॥

सनात् । अग्ने । मृणसि । यातुऽधानान् । न । त्वा । रक्षांसि । पृतनासु । जिग्युः ।
सहऽमूरान् । अनु । दह । क्रव्यऽअदः । मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ ११ ॥

समाहर जातवेदो यद्धृतं यत् पराभृतम् ।
गात्राण्यस्य वर्धन्तामंशुरिवा प्यायतामयम् ॥ १२ ॥

१ R ५ for ३. २ R ५ for ३.

सम्ऽआहर । जातऽवेदः । यत् । हृतम् । यत् । पराऽभृतम् ।

गात्राणि । अस्य । वर्धन्ताम् । अंशुःऽइव । आ । प्यायताम् । अयम् ॥ १२ ॥

**सोमस्येव जातवेदो अंशुरा प्यायतामयम् ।**

**अग्ने विरप्शिनं मेध्यमयक्ष्मं कृणु जीवतु ॥ १३ ॥**

सोमस्यऽइव । जातऽवेदः । अंशुः । आ । प्यायताम् । अयम् ।

अग्ने । विऽरप्शिनम् । मेध्यम् । अयक्ष्मम् । कृणु । जीवतु ॥ १३ ॥

**एतास्ते अग्ने समिधः पिशाचजम्भनीः ।**

**तास्त्वं जुषस्व प्रति चैना गृहाण जातवेदः ॥ १४ ॥**

एताः । ते । अग्ने । सम्ऽइधः । पिशाचऽजम्भनीः ।

ताः । त्वम् । जुषस्व । प्रति । च । एनाः । गृहाण । जातऽवेदः ॥ १४ ॥

**तार्ष्टाघीरग्ने समिधः प्रति गृह्णाह्यर्चिषा ।**

**जहातु क्रव्याद्रूपं यो अस्य मांसं जिहीर्षति ॥ १५ ॥**

तार्ष्टऽअघीः । अग्ने । सम्ऽइधः । प्रति । गृह्णाहि । अर्चिषा ।

जहातु । क्रव्यऽअत् । रूपम् । यः । अस्य । मांसम् । जिहीर्षति ॥ १५ ॥

इति षष्ठेऽनुवाके तृतीयं सूक्तम् ॥

“आवतस्ते” इति सूक्तस्य अंहोलिङ्गगणे पाठात् तस्य गणस्य यत्र यत्र सर्वभैषज्यार्थेषु विनियोगः [illegible] गोनुसंधेयः । अस्य विस्तरस्तु “अक्षीभ्याम्” इत्यत्र [२. ३३] उक्तः ॥

तथा अनेन सूक्तेन उपनयनानन्तरम् आयुष्कामं माणवकम् अभिमुखम् अभिमन्त्रयेत । सूत्रितं हि । “[illegible] आवतस्ते” [५. ३०] इत्यादि “इत्यभिमन्त्रयते आयुष्कामम्” इत्यन्ताम् [कौ॰ ५. ९.] ॥

तथा अग्निहसौ माणवकशरीराभिमन्त्रणेऽपि एतत् सूक्तम् । सूत्रितं हि । “इन्द्र देवाः [illegible] आवतस्ते” [illegible] इत्यादि “इत्यभिमन्त्रयते” इत्यन्तम् [कौ॰ ७. ९] ॥

तथा अस्य सूक्तस्य पितृमेधकल्पे सर्पाभिमन्त्रणानन्तरं अपि विनियोगः । तद् उक्तं परिशिष्टे । “[illegible] कल्पं व्याख्यास्यामः” इति प्रक्रम्य “सर्पान् अभिमन्त्र्य आवतस्ते इति जपेत्” इति [illegible] ॥

**आवतस्त आवतः परावतस्त आवतः ।**

**इहैव भव मा नु गा मा पूर्वाननु गाः पितॄनसुं बध्नामि ते दृढम् ॥ १ ॥**

१ B °घीरग्ने changed to °धीरग्ने. K K̈ S V °धीरग्ने. We with A B D R D C P P J Cp. २ B D S̈ C° पितृणसुं. We with A B K K̈ R V Dc.

आऽवतः । ते । आऽवतः । पराऽवतः । ते । आऽवतः ।

इह । एव । भव । मा । नु । गाः । मा । पूर्वान् । अनु । गाः । पितॄन् । असुम् । बध्नामि ।

ते । दृढम् ॥ १ ॥

यत् त्वाभिचेरुः पुरुषः स्वो यदरणो जनः ।

उन्मोचनप्रमोचने उभे वाचा वदामि ते ॥ २ ॥

यत् । त्वा । अभिऽचेरुः । पुरुषः । स्वः । यत् । अरणः । जनः ।

उन्मोचनप्रमोचने इत्युन्मोचनऽप्रमोचने । उभे इति । वाचा । वदामि । ते ॥ २ ॥

यद् दुद्रोहिथ शेपिषे स्त्रियै पुंसे अचित्त्या । उन्मो० ॥ ३ ॥

यत् । दुद्रोहिथ । शेपिषे । स्त्रियै । पुंसे । अचित्त्या ॥ ३ ॥ ३ ॥

यदेनसो मातृकृताच्छेषे पितृकृताच्च यत् ।

उन्मोचनप्रमोचने उभे वाचा वदामि ते ॥ ४ ॥

यत् । एनसः । मातृऽकृतात् । शेषे । पितृऽकृतात् । च । यत् ।

उन्मोचनप्रमोचने इत्युन्मोचनऽप्रमोचने । उभे इति । वाचा । वदामि । ते ॥ ४ ॥

यत् ते माता यत् ते पिता जामिर्भ्राता च सर्जतः ।

प्रत्यक् सेवस्व भेषजं जरदष्टिं कृणोमि त्वा ॥ ५ ॥

यत् । ते । माता । यत् । ते । पिता । जामिः । भ्राता । च । सर्जतः ।

प्रत्यक् । सेवस्व । भेषजम् । जरत्ऽअष्टिम् । कृणोमि । त्वा ॥ ५ ॥

इहैधि पुरुष सर्वेण मनसा सह ।

दूतौ यमस्य मानु गा अधि जीवपुरा इहि ॥ ६ ॥

इह । एधि । पुरुष । सर्वेण । मनसा । सह ।

दूतौ । यमस्य । मा । अनु । गाः । अधि । जीवऽपुराः । इहि ॥ ६ ॥

अनुहूतः पुनरेहि विद्वानुदयनं पथः ।

आरोहणमाक्रमणं जीवतोजीवतोऽयनम् ॥ ७ ॥

अनुऽहूतः । पुनः । आ । इहि । विद्वान् । उत्ऽअयनम् । पथः ।

---

¹ KKV omit अ°. We with ABDRSD C.

अयमग्निरुपसद्य इह सूर्य उदेतु ते ।
उदेहि[1] मृत्योर्गम्भीरात् कृष्णाच्चित् तमसस्परि ॥ ११ ॥
अयम् । अग्निः । उपऽसद्यः । इह । सूर्यः । उत् । एतु । ते ।
उत्ऽएहि[1] । मृत्योः । गम्भीरात् । कृष्णात् । चित् । तमसः । परि ॥ ११ ॥
नमो यमाय नमो अस्तु मृत्यवे नमः पितृभ्य उत ये नयन्ति ।
उत्पारणस्य यो वेद तमग्निं पुरो दधेस्मा अरिष्टतातये ॥ १२ ॥
नमः । यमाय । नमः । अस्तु । मृत्यवे । नमः । पितृऽभ्यः । उत । ये । नयन्ति ।
उत्ऽपारणस्य । यः । वेद । तम् । अग्निम् । पुरः । दधे । अस्मै । अरिष्टऽतातये ॥ १२ ॥
ऐतु प्राण ऐतु मन ऐतु चक्षुरथो बलम् ।
शरीरमस्य सं विदां तत् पद्भ्यां प्रति तिष्ठतु ॥ १३ ॥
आ । एतु । प्राणः । आ । एतु । मनः । आ । एतु । चक्षुः । अथो इति । बलम् ।

---

१ So A B B^h D K K^m R S^m V Dc Cs. P P^2 J Cp K V उत्ऽएहि॑ I. See सुमाहर, V. 29. 12.

अयं लोकः प्रियतमो देवानामपराजितः ।
यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे ।
स च त्वानु ह्वयामसि मा पुरा जरसो मृथाः ॥ १७ ॥

अयम् । लोकः । प्रियऽतमः । देवानाम् । अपराऽजितः ।
यस्मै । त्वम् । इह । मृत्यवे । दिष्टः । पुरुष । जज्ञिषे ।
सः । च । त्वा । अनु । ह्वयामसि । मा । पुरा । जरसः । मृथाः ॥ १७ ॥

इति षष्ठेऽनुवाके चतुर्थं सूक्तम् ॥

"यां ते चक्रुः" इति सूक्तस्य कृत्याप्रतिहरणगणे पाठात् तत्रतत्र तस्य गणस्य विनियोगस्थलेषु अस्य सूक्तस्य विनियोगोऽनुसंधेयः । विशेषस्तु "कृत्या दूषिरसि" इति सूक्ते [२. ११] कृतः ॥

यां ते चक्रुरामे पात्रे यां चक्रुर्मिश्रधान्ये ।
आमे मांसे कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ॥ १ ॥

१ BR त्नुं. २ BBKKADRVCs PPJCr नु. We with S D. ३ P नकुम् ।. ४ K मो. ५ PPJVCr पुरुषऽजज्ञिषे ।.